।। श्रीश्रीगौरगदाधरौ विजयेताम् ।।

# हिन्दुधर्मरहस्यम्
# वा
# सर्वधर्मसमन्वयः

( श्रीरमेन्द्रचन्द्र तर्कतीर्थेन प्रणीतम् )



- श्रीहरिदास शास्त्री

।। श्रीश्रीगौरगदाधरौ विजयेताम् ।।

# हिन्दुधर्मरहस्यम्
# वा
# सर्वधर्मसमन्वयः

( श्रीरमेन्द्रचन्द्र तर्कतीर्थेन प्रणीतम् )

श्रीवृन्दावनधामवास्तव्येन
न्यायवैशेषिकशास्त्रिन्यायाचार्यकाव्यव्याकरणसांख्य
मीमांसावेदान्ततर्कतर्कन्यायवैष्णवदर्शनतीर्थ
विद्यारत्नाद्युपाध्यलङ्कृतेन
श्रीहरिदासशास्त्रिणा सम्पादितम्।

सद्ग्रन्थ प्रकाशक :
**श्रीहरिदास शास्त्री**
श्रीगदाधर गौरहरि प्रेस
(श्रीहरिदास निवास)
प्राचीन कालीदह, वृन्दावन (मथुरा) उ. प्र.

प्रकाशक :

**श्रीचैतन्य संस्कृति संस्था**

(श्रीहरिदास निवास)

प्राचीन कालीदह, वृन्दावन (मथुरा) उ. प्र.

फोन : ०५६५-२४४२०६८, २४४३६६५, ३२०२३२५



प्रकाशन तिथि :

**श्रीराधाजन्माष्टमी**

श्रीगौरांगाब्द : ५२२



प्रथमसंस्करणम्



प्रकाशन सहयोग :

५०) रुपया मात्र







मुद्रक :

**श्रीगदाधर गौरहरि प्रेस**

(श्रीहरिदास निवास)

प्राचीन कालीदह, वृन्दावन (मथुरा) उ. प्र.

# सूचीपत्रम्

।। श्रीश्रीगौरगदाधरौ विजयेताम् ।।

# हिन्दुधर्म-रहस्यम्

## सर्वधर्मसमन्वयः

### आमुखम्

दार्शनिकप्रवरः सुगृहीतनामधेयो दिवंगतः डाः-राधाकृष्णन् महोदयः कस्मिंश्चिद् ग्रन्थे लिखितवान् यद् अधुनातनो भारतीय समाजो नवीनस्मृति-शास्त्रस्य कृते विलापं करोति। परिवर्त्तनशीलं जगत्। स्मृतिशास्त्रीयाणां मूलग्रन्थानां निबन्धानां भाष्याणाञ्च रचनाकालात् परं बहूनि वर्षशताति व्यतीतानि। दृश्यन्ते च सामाजिक-व्यवस्थासु नैकानि परिवर्त्तनानि। वस्तुतो गतिशीले समाजे नवीनभावधाराप्रवाह स्तस्य स्वास्थस्य लक्षणम्। वर्तमानकालीनायां जीवनयात्रायां स्मृतिशास्त्रस्य अनुशासनानि इच्छासत्त्वेऽपि वयं पालयितुं न शक्नुमः। अतो धर्मस्य मूलरक्षणाय सर्वैर्यतितव्यम्।

पण्डितप्रवरो वर्षीयान् स्वभिज्ञो नानाशास्त्रपारङ्गमो रमेन्द्रचन्द्रतर्कतीर्थमहोदय एतद्विषये अवधानं ददातीति महन्मे हर्षकारणम्। अत्र प्रबन्धे तेन वर्णाश्रमधर्मः, विभिन्नसम्प्रदायगता आचाराः, प्रतिमापूजनम् इत्यादयो बहुविधा विषया निपुनमालोचिताः। वर्णभेदप्रसङ्गेन वर्णव्यवस्थाया मूलं तेन नानाशास्त्रवचनानि प्रमाणीकृत्य सम्यग् विवेचितम्। गुणवान् हीनवर्णजोऽपि जनो गुणहीनादुत्तमवर्णजाद् अधिकतरं सम्मानं लब्धुमर्हतीति दर्शितं पण्डित-प्रकाण्डेन तर्कतीर्थमहोदयेन। अनया दिशा समाजस्य प्रभूतं कल्याणं भविष्यतीति नास्ति सन्देहलवोऽपि।

हिन्दुबौद्धजैनादिविभिन्नसम्प्रदायानां धर्मेषु मौलिकमैक्यं प्रतिपादयता विपश्चिता तेन देशस्य महोपकारः साधितः। सुविशालेऽस्मिन् भारतवर्षे हिमालयादारभ्य कुमारिकां यावत् बहुविध-सम्प्रदायानां वासोऽस्ति। सर्वे ते भारतीया इति चेतना भारतस्योन्नतिसाधने नितरामेव प्रयोजनीया। सर्व-सम्प्रदायगतानां जनानां मूलीभूतमैक्यमस्ति इति ज्ञानमस्मद्देशस्य स्वाधीनता-रक्षार्थमपरिहार्य्यम्। इस्लामखृष्टादिधर्मावलम्बिनामपि धर्माणां सारोऽस्माकं धर्मात् न भिन्न इति प्रदर्शितमस्मिन् ग्रन्थे। शकहूणपाठान मोगलादि-वैदेशिका भारतवासिनां देहेषु लीनाः

सन्त एकीभूता इति गीयते कविकुलशिरोमणिना ऋषिकल्पेन रवीन्द्रनाथेन। सर्व-सम्प्रदायेषु एकजातित्वबोधं जनयितुं महती चेष्टा वर्त्तते भारतीयसर्वकाराणामपि।

अस्मिन् ग्रन्थे नवीनदृष्टिभङ्ग्या ब्राह्मण्यधर्मस्य सनातनत्वं व्याहतमिति केचिद् ब्रूयुश्चेत् तन्न समीचीनमिति वयं मन्यामहे। धर्मस्य वेदमूलत्वमेव सनातनत्वम्। तन्नोपेक्षितं ग्रन्थकारेण। आचाराः सृष्टिकालादारभ्य चिरमविकृतास्तिष्ठेयुरिति धर्मस्य सनातनत्वमिति केचिद् ब्रूयुश्चेत् नमस्तेभ्यो वास्तवज्ञानरहितेभ्यः। युगे युगे एव आचाराणां परिवर्तनं जातमिति सर्वेषामेव वास्तवदर्शिनां मतम्।

'सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पन्डितः' इति महाजन वाक्यं यथार्थमेव। ये ये आचारा अस्मिन् काले अचलमुद्रावत् उपेक्षिता जनसाधारणै स्तेषां परिवर्तनेन वर्जनेन वा मौलिको धर्मो रक्षितो यदि भवति तत्कृतेऽस्माभिर्यतितव्यं नवेति विचार्यतां सुधीभिः।

ग्रन्थस्यास्य बहुलप्रचारं कामये। तदेष भवतां हिताय, त्यज वैनं गृहाण वेति पाठकगणाय निवेद्य विरतो भवामि। अलमति विस्तरेण इति।।

दोल पूर्णिमा श्रीसुरेशचन्द्र वन्द्योपाध्यायः

१३८२ (पश्चिम बङ्गीय संस्कृत शिक्षा परिषदः प्राक्तनसचिवः।)

# मङ्गलाचरणम्

नमामि धर्मं श्रुतिमर्मवर्मितं
विश्वस्य शान्तिस्थितिशर्ममोक्षदम्।
धातापि नातिक्रमितुं प्रधावति
सूक्षेक्षणं यं प्रलयेऽपि सङ्गिनम्। ।१
श्रीहट्ट नर्त्तन जनो द्विजवंशकेतो:
श्रीरेवतीरमण शर्मण आत्मजो य:।
बङ्गेऽङ्गभङ्गविकले निजवास्तुभूमिं
त्यक्त्वागतोऽत्रवत पश्चिमबङ्गभूमौ। ।२
श्यामाख्य-कायस्थविशालवंशज-
प्रभात-विख्यात वदान्य दानत:।
शास्त्राणि चित्वा रचितं सुचिन्तितं
रमेन्द्रचन्द्रेन विपश्चिताऽमुना। ।३
'हिन्दुधर्मरहस्याख्यं' सर्वधर्मैकतार्थकम्।
बङ्गाब्दे नेत्रनागाग्निचन्द्रमे पूर्णतां गतम्। ।४
सन्ति चान्ये प्रबन्धाश्च प्रकाशिता मया परा:।
'रासपञ्चाध्यायी' तत्र रासदोषभ्रमापहा। ।५
'लक्षश्लोकरहस्यं' च भारतस्य तत: परम्।
श्लोकानां लक्षसंख्यातिक्रमादिभ्रमवारकम्। ।६
विवस्वानिव भास्वर: 'स्मृतिसारसंग्रहविमर्शो' हन्ति।
बुधपुङ्गवस्य शास्त्रप्रदीपापह्नवात् कस्यचित् तम:। ।७
प्रकाशापेक्षया सन्ति 'पतितव्यवहार्य्यता'।
'अन्त्यजाद्यम्वुपानञ्च' 'धर्मस्य परिवर्त्तनम्'। ।८
शास्त्रसम्मतमेवैते ग्रन्था स्त्रय: पुरस्कृता:।
असमसर्वकारेण विचारसमितौ पुरा। ।९
'गीतारहस्य' 'नामाद्या श्चान्येऽपि बहव: स्थिता:।
वार्त्तिक पत्रिकादौ च क्वचित् केचित् प्रकाशिता:। ।१०

।। श्रीश्रीगौरगदाधरौ विजयेताम् ।।

# हिन्दुधर्म-रहस्यम्

## वा

# सर्वधर्म-समन्वयः

हिन्दुधर्माभिध वैदिकधर्मपरिचितिप्रसङ्गेन केचन विपश्चितः श्रुति-स्मृति-तन्त्रादि शास्त्र सम्मत धर्मत्वमेव तस्य लक्षणमामनन्ति, तदन्ये न मन्यन्ते; श्रुत्यादिशास्त्रविरुद्धाचारिणां बौद्धजैनादीनां धर्मेषु अव्याप्तेः। यद्यत्र चेष्टापत्तिः क्रियते तथापि जातिभेदाद्यस्वीकारकारिणो ब्राह्मा, 'भेक'-धारिणो वैष्णवविशेषा एवमन्येऽपि 'सहजिया' - दयश्च बहवः सम्प्रदाया हिन्दुशब्दवाच्यतया सर्वैरेव स्वीक्रियन्त इति तत्तदवलम्बितधर्मेषु श्रुतिस्मृत्यादिविरोधेनाव्याप्त्यापत्तेः।

एतेन चातुर्वर्ण्य-चातुराश्रम्यविहितधर्मत्वमेव तदित्यपि निरस्तं ब्राह्मादिषु चातुर्वर्ण्याद्याचाराभावात्।।१।।

अपि च वेदादिशास्त्रेषु कुत्रापि 'हिन्दुधर्म' इति साम्प्रदायिक-'हिन्दु'-विशेषणाक्रान्तधर्मशब्दोऽपि न दृश्यते, सर्वत्रैव निरुपपदधर्मशब्दस्य प्रयोगाद् वैदिक-धर्मत्वमपि हिन्दुधर्मस्य कथं वोपपद्यत इति चेदत्र ऐतिहासिका वदन्ति-

'हिन्दु'-शब्दोऽयमत्याधुनिकः। गौरवान्वितदेशार्थवाचकस्य ग्रीस्‌देशीय-'हिन्द्'- शब्दस्य भारतवर्षबोधनार्थं तद्देशवासिभिः प्रथमं प्रयुक्तस्यापभ्रंसरूपेणाधुना भारतसम्बन्धितया वैदिक धर्मावलम्बिनो भारतीयार्य्यजना एव 'हिन्दु'-शब्द वाच्या भवन्तीति।

अपरे प्राहुः- 'आभेस्तिक'-भाषायां सर्वत्र 'सकार'-स्थाने 'हकार' उच्यते। यथा-असुर-सप्त-सोम-सिन्धुप्रभृतिशब्दस्थाने क्रमेन तत्र अहुर-हप्त-होम-हिन्दु-प्रभृतयः शब्दाः पठ्यन्ते। अतस्तद्‌भाषानुसारेण 'सिन्धुदेशवाचकहिन्दु-' शब्देन तद्देशवासि-वैदिकधर्मावलम्बिन आर्य्यजना एव आभेस्तिकभाषिभिः प्रथमं परिभाषिताः, पश्चाच्च भारतीयार्य्यजनमात्रे एवायं शब्दः सङ्केतितः इति।।२।।

यथैवास्तु, तेषां भारतीयार्याणामाचरितो धर्म एव हिन्दुधर्मवाच्य इत्यत्र नास्ति कोऽपि विवादः। आर्य्याणां वेदविहितधर्मावलम्बित्वात् हिन्दुधर्मस्य वैदिकधर्मत्वमपि न व्याहन्यत इति।

अपि च धर्मशब्दस्य धृ-धातो 'र्मन्' प्रत्ययनिष्पन्नतया व्युत्पत्तिगतोऽर्थः यो धारयति स धर्मः, योगरूढ्या च यः प्रजादि सर्वं जगत् सुशृङ्खलपरिचालनादि रूपेण सुस्थितं धारयति स धर्म इति। तथाचोक्तं तैत्तिरीये-'धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदन्ति, धर्मे सर्वं प्रतिष्ठितमिति।'

महाभारते शान्तिपर्वणि च (१०६ अः) -

'धारणाद् धर्म इत्याहु र्धर्मेण विधृताः प्रजाः।
यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः'।। इति।।

नैरुक्तास्तुधारणकर्त्तृयोग्यनियमरूपमर्थं मन्वत इति धारणौपयिको धर्मशब्द-स्यार्थो बोद्धव्यः।

आपस्तम्वगृह्यसूत्रे च- 'यं तु क्रियमाणमार्य्याः प्रशंसन्ति स धर्मः। यं गर्हन्ते सोऽधर्म' इति।।७।।

एतेन मानवानां, प्राणिनां, किं बहुना-चराचरजगताञ्च मङ्गलसाधनेन, उत्पीड़नप्रतिरोधेन च यो जगतः सुस्थितिं रक्षति स एव धर्मः। स च कर्त्तव्या-कर्त्तव्यविषययो र्नियमानुगत कर्मस्वरूप इति निर्गलितार्थः पर्य्यवस्यति।

वैशेषिकदर्शने च-यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति धर्मलक्षणस्य यतो यस्मात् कर्मणः साक्षात् परम्परया वा लौकिकाभ्युदयकामिनामुन्नतिर्मुमुक्षूणाञ्च मुक्ति र्भवेत् तत्तत् कर्मैव धर्मपदार्थः। अत्राभ्युदयपदेन दैवीसम्पदेव बोद्धव्या, नत्वासुरी सम्पत्। अन्यथा चौर्य्याद्यधर्मकर्मणापि आपाततः किञ्चदभ्युदयलाभेन तादृशाधर्मेऽति-व्याप्त्यापत्तेः। यथोच्यते भगवता गीतायाम्-

'अभयं सत्त्वसंशुद्धि र्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्याय स्तप आर्जवम्।।
अहिंसा सत्यमक्रोध स्त्यागः शान्तिरपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्।।

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीमभिजातस्य भारत।।
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्।।
दैवी सम्पद् विमोक्षाय निवन्धायासुरी मता'।।

इति (१६/१-५)।।४।।

महाभारते शान्तिपर्वणि च (१०६/१०)

'प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम्।
यः स्यात् प्रभव संयुक्तः स धर्म इति निश्चयः।।' इति

प्रभवार्थाय अभ्युदयार्थमित्यर्थः। तेन वैशेषिकधर्मलक्षणसमार्थता स्थिता। जैमिनि दर्शनेऽपि-'चोदनालक्षणोऽर्थो धर्म इति'। चोदनालक्षणो वेदबोधित-प्रेरणालक्षणः। अर्थः श्रेयः साधनं कर्म। धर्मो धर्मपदार्थः इत्यर्थः। मीमांसा परिभाषायाञ्च-'वेदबोधितेष्टसाधनताको धर्मः। यथा-यागादिः। वेद-बोधितानिष्ट-साधनताकोऽधर्मः। यथा-कलञ्जभक्षणादिरिति।' अत्र धर्माधर्मफलयो र्हिताहितयोः प्रायेणातीन्द्रियतया वेदमात्रगम्यत्वादेव वेदबोधितेति विशेषणम्।।५।।

एतेषां लक्षणानां भाषागतपार्थक्यसत्त्वेऽपि वस्तुतः कोऽपि प्रभेदो नास्ति। तथाहि-येन येन नियमेन परिचालितं जगत् सर्वेषां लौकिकालौकिक मङ्गल-साधनेन स्वकीय सुस्थितिं रक्षति, तथाविधो नियम एव तत्तन्मङ्गलसाधक कर्मणि मानवान् प्रचोदयतीति वेदबोधितः स स नियम स्तदनुगतं कर्म वा द्वयमेव धर्मपद वाच्य-मित्यर्थः।

सार्वभौमोऽप्ययं धर्मो वेदविहितत्वादेव भाष्यते जनै 'वैंदिक धर्म' इति। तन्मूलकक्रियैव धर्मानुष्ठानं, तदीयानुशासनञ्च धर्मानुशासनं वेदितव्यमिति।।६।।

स च धर्मो द्विविधः-नीतिमूलकः, शास्त्रादिविश्वासमूलकश्च। तत्राद्यो यथा- 'मा हिंस्यात् सर्वा भूतानि * इति' श्रुत्यादिविहितोऽहिंसाद्यात्मकः। उक्तश्रुतौ हिंसेति पीड़नार्थकानामप्युपलक्षणम्। वक्ष्यमाणस्मृत्यादिवाक्येभ्यः प्राणिपीड़ा-वारकाणां सत्यादीनामपि धर्मत्वाङ्गीकारात्। अथवा 'हिंसार्थानामज्वरेः' इति

* न हिंस्यादिति शङ्करादयः, मा हिंस्यादिति रघुनन्दनादयः पठन्ति।

कातन्त्रसूत्रे पीड़नार्थक ज्वरादि धातूनामपि हिंसार्थत्वस्वीकारेण, 'हिंसा चौर्य्यादि कर्म च' इत्यमर कोषे स्तेयादेरपि हिंसापर्य्यायपठितत्वेन च हिंस-धातोरेव पीड़नार्थत्वा-वगमाद् यथाश्रुतमेव सम्यक्। अतएव नीलकन्ठेन-'अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् (शान्ति १०६/१२) इत्यस्य व्याख्यायाम्-अहिंसा अपीड़नमित्युक्तमिति।।७।।

अयञ्च अहिंसाद्यात्मको नैतिक धर्मो देशकालजात्याद्यनियन्त्रितत्वात् मानव साधारणो बोध्यः। तथा च स्मृतौ-

अहिंसा सत्यमस्तेयं शौचमिन्द्रिय निग्रहः।
एतत् सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः।। (मनु-१०/६३)
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम्।। (याज्ञ-१/१२२)
क्षमा सत्यं दमः शौचं सर्वेषामविशेषतः।। (शङ्ख-१/५)
सर्वेषां सत्यमक्रोधो दानमहिंसा प्रजननञ्च।। (वशिष्ठ-४)
अक्रोधः सत्यवचनं संविभागः क्षमा तथा।
प्रजनः स्वेषु दारेषु शौचमद्रोह एव च।
आर्जवं भृत्यभरणं नवैते सार्ववर्णिकाः।।
(महा-शान्ति-६०)।।८।।

इत्येतावता ज्ञायते-जगति नीतिपर्य्यायभूता ये येऽहिंसादयो लौकिकधर्माः सामान्यधर्मरूपेण शास्त्रेषु निरूपिता स्ते च सर्वजनीनविषयकत्वात् मनुष्यमात्र-स्यैवाचरणीयाः, नात्र जात्यादिभेदेन विशेषव्यवस्था विद्यते। किन्तु यस्मिन् देशे काले जात्यादौ वा यादृशा आचारा समाजरक्षणार्थमपरिहार्य्यतया अभ्युदय कारकतया वा मन्यमानाः सद्भिरनुष्ठीयन्ते, स्मृत्यादिनिन्दिता अपि यदि वेदनिन्दिता न स्यु स्तदा तत्तद्देशकालजात्यादावेव सीमिताः सन्त स्तादृशा आचाराः सदाचारधर्मरूपेण गण्यन्ते। यथा-माद्राजादि (तामिलनाडुप्रभृति) देशे मातुलकन्याविवाहः पलान्डुभक्षणं वा, तान्त्रिकब्राह्मणसाधकानां सुरापानंबङ्गे ब्राह्मणानां मत्स्यभोजनं, द्वापरादौ देवरेण सुतोत्पत्तिरित्यादयः स्मृति निन्दिता आचारा स्तत्तद्देशादावेव धर्म्या भवन्ति नान्यत्रेति। इत्थमेव स्वाचार-बहिर्भूतानपि कांश्चिदाचारान् हितकरान् समाजहितकामिनो वैदिका न निन्दितवन्तः परन्तु समर्थितवन्त एवेति सदाचारव्याख्यानावसरे पश्चात् प्रपञ्चयिष्यते।

द्वितीयस्तु विश्वासमूलको धर्मो वर्णभेदेन आश्रमभेदेन स्त्रीपुरुषादिभेदेन च बहुधा भिद्यते। तत्तद्भेदस्यासंख्यत्वात् समासेन दिङ्मात्रमिह प्रदर्श्यते।।६।।

चातुर्वर्ण्याश्रमधर्माः।

वर्णा श्चत्वारः ब्राह्मणक्षत्रियवैश्यशूद्राः। आश्रमाश्चापि चत्वारः- ब्रह्मचर्य्य-गार्हस्थ्य-वानप्रस्थ-सन्यासाः। तत्र ब्राह्मणक्षत्रियविशामुपनयनात् परं गुरुगृहे ब्रह्मचर्य्यमवलम्ब्य सन्ध्योपासनादिपूर्वकं वेदाध्ययनमेव ब्रह्मचर्य्याश्रमोक्त धर्मः। तथाचोक्तं मनुना-

'सेवेतेमास्तु नियमान् ब्रह्मचारी गुरौ वसन्।
संनियम्येन्द्रियग्रामं तपोबृद्धार्थमात्मनः।।
नित्यं स्नात्वा शुचिः कुर्य्याद् देवर्षिपितृतर्पणम्।
देवताभ्यर्चनञ्चैव समिदाधानमेव च,।। (२/१७५-१७६) इति

एवं हारीतेनापि-

कुर्य्यादध्ययनञ्चैव ब्रह्मचारी यथाविधि।
विधिं त्यक्त्वा प्रकुर्वाणो न स्वाध्यायफलम् लभेत्'।। इति

ततो गार्हस्थ्याश्रमेच्छुना तदाश्रमविहिता वक्ष्यमाणधर्माः सेवितव्याः। तथाहि-दार परिग्रहं बिना तत्रानधिकारात् प्रथमं दारपरिग्रहः। ततश्च पूर्वाश्रम विहितसन्ध्योपासनादिकं कृत्वा वेदाध्यापनाद्यात्मको ब्रह्मयज्ञः वैवाहिकेऽग्नौ सायं प्रातश्च होमात्मको देवयज्ञः, मृतपितृकाणां पितृतर्पणं प्रतिदर्शममावस्या-श्राद्धञ्चेति पितृयज्ञः, भूतेभ्योऽन्नादिदानात्मको भूतयज्ञः, अतिथिसत्काराख्यो नृयज्ञश्चैते पञ्च महायज्ञाः प्रत्यहमेव गृहिभिः कर्त्तव्या नित्यत्वात्। तथाचोक्तं मनुना।

वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि।
पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही।। (३/६७)
पञ्च क्लिप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्।
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम्।। (३/७१)
पितृयज्ञन्तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिन्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्।। (३/१२२)

इति।।१०।।

उक्तान्येतानि नित्यकर्माणि। सन्ति चापराणि नैमित्तिक कर्माणि काम्य-कर्माणि च। तत्र नैमित्तिककर्माणि–निमित्ते उपस्थिते सति कर्त्तव्यानि नतु नित्यमेव। यथा–पुत्रजन्मादौ निमित्ते सति जातकर्मादयः। काम्य–कर्माणि च–तत्तत्फलकामनया कर्त्तव्यानि। यथा–स्वर्गादिफलकामनया ज्योतिष्टोमादयः। इत्थमेव संख्यातीता गार्हस्थ्यधर्मा विज्ञेयाः।

अतः परं परिणतवयसि मुमुक्षूणाञ्च वानप्रस्थाश्रमो विधीयते। तत्र सपत्नीक एकाकी वा गृहैश्वर्य्यादिकं परित्यज्य अरण्यादौ निर्जने पर्णकुटीरवासी दीनभावेन मुनिजनोचितेन फलमूलादिना प्रागुक्तान् पञ्च महायज्ञान् प्राणरक्षाञ्च कुर्वन् उग्रतपस्यया तनुञ्च परितापयन् ब्रह्मध्यानपरायणस्तिष्ठेत्। तथाचोक्तं वानप्रस्थधर्मवर्णनावसरे मनुना–

मुन्यन्नैर्विविधै र्मेध्यैः शाकमूलफलेन वा।
एतानेव महायज्ञान निर्वपेद् विधिपूर्वकम्।। (६/५)
उपस्पृशंस्त्रिसवनं पितृन् देवांश्च तर्पयेत्।
तपश्चरंश्चोग्रतरं शोषयेद् देहमात्मनः।। इति।। (६/२४)

ततो वैराग्यप्रकर्षे उपजाते प्राजापत्ययागं कृत्वा सन्यासाश्रमे प्रविशेत्। तथोचोक्तं तत्रैव –

प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणम्।
आत्मन्यग्निं समारोप्य ब्राह्मणः प्रब्रजेद् गृहादिति।। (६/३८)

सन्यासाश्रमे च प्रधानतः सर्वसङ्गपरित्यागेन ब्रह्मध्यानपरायणता विधीयत इति वानप्रस्थाश्रमादस्य विशेषः।।२१।।

'ब्रह्मचर्य्य' समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रब्रजेत्। इतरथा ब्रह्मचर्य्यादेव प्रब्रजेत्, गृहाद् वा वनाद् वेति'–जाबालश्रुत्या आश्रमक्रमानु-सारेण पूर्वपूर्वाश्रमात् परं यस्मात् कस्माद्वा आश्रमात् सन्यासधर्माश्रयणं विधीयते।

एषु चतुर्षु आश्रमेषु यथाधिकारमवश्यमेव कञ्चिदेकमाश्रममवलम्ब्य स्थातव्यम्। तथाचोक्तं स्मृतौ–

अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः।। इति (दक्षी १/१०)

सदारकर्त्तव्यानां गार्हस्थ्याश्रमधर्माणां भार्य्यावियोगादिजनितस्खलने तु आश्रमानियतै र्जपोपवासादिकर्मभिरपि आश्रमधर्मचर्य्याफललाभात् विधुरादयस्तेऽनाश्रमिणो न तत्पापस्पर्शिनो भवन्ति। तथाचोक्तं मनुना-

'जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः।
कुर्य्यादन्यन्नवा कुर्य्यान्मैत्रो ब्राह्मण उच्यते।। इति। (२/८७)

एतच्च पश्चादाश्रमधर्मासमर्थस्य विकल्पधर्मप्रतिपादनावसरे विशदं प्रतिपाद्यते।।१२।।

इत्येते आश्रमधर्मा उक्ताः। अधुना वर्णधर्माः कथ्यन्ते।

ब्राह्मणः प्रव्रजेद् गृहादित्यनेन मनुना ब्राह्मणस्यैव सन्न्यासाधिकारः स्वीकृतो नत्वन्येषाम्। अतो ब्राह्मणस्य चतुर्षु आश्रमेषु क्षत्रियवैश्ययोश्च वानप्रस्थान्तेषु त्रिषु, शूद्राणाञ्च उपनयन-संस्काराभावात् वेदाध्ययनाद्यनधिकारेण केवलं मन्त्रवर्जितगार्हस्थ्यधर्ममात्रे चाधिकारः। तथाचोक्तं याज्ञवल्क्येन शूद्रधर्म-वर्णनावसरे-

'भार्य्यारतिः शुचिर्भृत्यभर्त्ता श्राद्धक्रियारतः।
नमस्कारेण मन्त्रेण पञ्च यज्ञान् न हापयेत्।।' (१/१२१)।। इति

मनुना च-

'धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुष्ठिताः।'
मन्त्रवर्जं न दूष्यन्ति प्रशंसां प्राप्नुवन्ति च।। (१०/१२७)।।
इति।।१३।।

एवं वर्णभेदेन वृत्त्यादि कर्मभेदा अपि विद्यन्ते। तथाचोक्तं विष्णुना-

'ब्राह्मणः क्षत्रियः वैश्यः शूद्रश्चेति वर्णाश्चत्वारः। तेषामाद्या द्विजातयस्त्रयः। तेषाञ्च धर्माः-ब्राह्मणस्याध्यापनम्। क्षत्रियस्य शस्त्रनित्यता। वैश्यस्य पशुपालनम्। शूद्रस्य द्विजाति शुश्रूषा। द्विजानां यजनाध्ययने।

अथैतेषां वृत्तयः-ब्राह्मणस्य याजनप्रतिग्रहौ। क्षत्रियस्य क्षितित्राणम्। कृषि-गोरक्ष-वाणिज्य-कुसीद्-योनिपोषणानि वैश्यस्य। शूद्रस्य सर्वशिल्पानि। आपद्यनन्तरा वृत्तिः'।। इति

एवं वेदादिभेदेनापि वर्णाश्रमधर्मा विभिन्ना आकरेभ्यो ज्ञेयाः। सन्ति तु वर्णाश्रमयोरनियता जपतपः-श्रद्धा-भगवदुपासनादयो वैश्वासिकधर्माः सर्वेषां वर्णानामिति पश्चात् प्रदर्शयिष्यते।

एते च वैदिकानां प्राधान्येन स्थिताः श्रुतिस्मृत्यादिसम्मता वर्णानामाश्रमाणाञ्च प्राचीनाचाराः समासेनोपवर्णिताः।।१४।।

नव्यप्राचीन-धर्मयोरनैक्यम्।

किन्त्वधुना हिन्दुधर्मे दृश्यते-यथोक्त-ब्रह्मचर्य्याश्रमो विलुप्त एव। गार्हस्थ्याश्रमोक्तपञ्चमहायज्ञेषु यथाविधि वेदाध्ययनादिरूपो ब्रह्मयज्ञस्तिरोहितः। होमात्मकदेवयज्ञस्थाने स्मृतितन्त्रादिसम्मता देवपूजा प्रवर्त्तिता। पितृयज्ञोऽपि अन्वाहार्य्यादिश्राद्धवर्जितः प्रायेण तर्पणरूपेणावस्थितः। प्राणिनामन्नादि-दानात्मको भूतयज्ञः कथामात्रेणावशिष्टः। अतिथिपूजास्वरूपो नृयज्ञश्च कादाचित्को दृक्पथमायाति। वानप्रस्थसन्न्यासौ च शूद्रादिभिरपि गृह्यमानौ कदाचित् क्वचित् रूपान्तरितौ दृश्येते इति।

इत्थं सर्वावयवेष्वेव विपर्य्ययादस्य हिन्दुधर्मस्य वैदिकधर्मत्वमपि अधुना स्वीकर्त्तुं शक्यते नवेत्याशङ्का जागर्त्ति जगत्यनेकेषाम्। स्वीक्रियते चेत् को वा तस्याकरः, का वा प्रतिष्ठा, कथं वा ब्राह्मादिधर्मेषु वैदिकधर्मलक्षणसमन्वय इत्यादयः प्रश्नाः पुनश्च जाग्रत्यत स्तत्तत्संशयनिरसनाय क्रमशोऽत्र यतिष्ये।।१५।।

हिन्दुधर्मस्याकरग्रन्थाः।

अस्य धर्मस्याकरनिर्णयार्थं पराशरेणोक्तम्-

न कश्चिद् वेदकर्त्ता च वेदस्मर्त्ता चतुर्मुखः।
तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे।। (१/२०)

इत्यनेन ब्रह्मकर्त्तृक वेदस्मरणं मनुकर्त्तृकधर्मस्मरणञ्च विज्ञापितम्। 'यन्मनुरवदंत् तद् भेषजमिति' छान्दोग्यश्रुतेः 'वेदार्थोपनिवन्धृत्वात् प्राधान्यं हि मनोः स्मृतमिति' स्मृतेश्च धर्मनिर्णये मनुवचनस्य प्राधान्यमभिहितम्। मनुना च-

'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मन स्तुष्टिरेव च।।'' (२/६)

इत्युक्त्याखिलो वेद एव प्रथमतो धर्मस्याकरस्थानमुक्तम्। वेदभाष्यकृता सायणाचार्य्येण चापि कृष्णयजुर्भाष्यभूमिकायां-'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिक-मुपायं यो वेदयति स वेदः' - इत्युक्त्या प्रागुक्तमङ्गलसाधकोपायात्मक धर्मस्याकर-स्थानं वेद एवेति प्रतिज्ञातम्। एवम्-'अथातो धर्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्मः। श्रुतिश्च द्विविधा वैदिकी तान्त्रिकी च।' इति कुल्लूकभट्टधृत हारीतवचने (मनु-२/६) तन्त्रस्यापि श्रुतित्व स्वीकारात्, 'श्रुतिस्तु वेदो विज्ञेयः' (२/१०) इति मनुवचनेन श्रुतिमात्रस्य वेदत्वप्रतीते स्तन्त्रोऽपि वेदत्वाद् धर्मे प्रमीयते।

छान्दोग्ये च-'इतिहासपुराणं पञ्चमं वेदानां वेदम्'. (७/२/४) इति निर्देशात् महाभारतादिसहितपुराणशास्त्राणामपि वेदतुल्यतया तान्यपि धर्ममूलानि। 'इतिहास-पुराणाभ्यां वेदं समुपवृंहयेदिति' स्मृतेश्च वेदार्थस्य सम्यग् उपलब्ध्यै इतिहासस्य पुराणानाञ्चावश्यकत्वमपि प्रतिपादितमिति।।१६।।

किन्त्वधुना वेदानामधिकांश विलुप्तेः केवलं वेदादेव धर्मनिर्णयो न सम्भाव्यते। तथाहि 'स च वेदो बहुधाभिन्नः - सहस्रवर्त्मा सामवेदः, एकशतम-ध्वर्य्यूणाम्, एकविंशति र्वाह्वृच्याः, नवधा आथर्वणः।' इति मेधातिथ्यादिवाक्येषु (मनु २/६) वेदानां बहुशाखास्वीकारेऽपि अधुना पञ्चषाः शाखा एव केवलं दृश्यन्ते। अतोऽन्या विलुप्ता एव। एवं भाष्यादिधृतानां वह्वीनां खन्डशः श्रुतीनां मूलग्रन्थान-वलोकनात् तत्तदंशविलुप्तिरनुमीयत एव। अतएवोक्तमापस्तम्बेन-'ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्त इति।।१७।।

अतः सुप्राचीन कालादारभ्य वेदानां बहुशाखाविलुप्ते र्वेदमूलकत्वेनैव स्मृत्यादीनामपि प्रामाण्यं प्रदर्शयितुं मनुना पुनरुक्तम्-स्मृतिशीले च तद्विदामिति। तद्विदां वेदविदाम्। स्मृतिः वेदार्थस्मरणमूलकं धर्मशास्त्रम्। धर्मशास्त्रन्तु वै स्मृतिरिति मनूक्तेः। (२/१०) मन्वादिसंहिता, इतिहासपुराणमित्यादि पूर्वोक्त-श्रुत्या च महाभारत पुराणादिशास्त्राण्यपीति यावत्। शीलं स्वभाव आचारात्मकः। 'चरणञ्चारित्रामाचारः शीलमित्यनर्थान्तरमिति' शङ्करभाष्यप्रयोगात् (ब्रह्म ३/१/६)। तथाच वैदिकानां स्मृत्याचाराभ्यामपि धर्मो निर्णेतव्य इत्यर्थः।।१८।।

पुनश्च मनुना-'आचारश्चैव साधूनामित्युक्तम्'। साधूनां धार्मिकाणां शिष्टानामाचारो व्यवहारोऽपि धर्मे प्रमाणम्। अत्र 'स्मृतिशीले च तद्विदामित्यनेनैव'

गतार्थत्वेऽपि 'आचारश्चैव साधूनामिति' पृथगुपादानात् न केवलं वेदाचारवतां धार्मिकाणामत्र ग्रहणमभिधीयते, अपि तु यथा कथञ्चित् साधनादि-सिद्धसत्यदर्शिनाम् अहिंसादिगुणोपेतानां कामक्रोधादिदोषरहितानाञ्च जगतो हितकामनया विचरतां शिष्टानामपि। तेषामप्याचारः सदाचारतया प्रमाणमित्यर्थः। तथाचोक्तं विष्णुपुराणे-

'साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः।
तेषामाचरणं यत्तु सदाचारः स उच्यते।। (३/११/७) इति।।१६।।

नचैवं शीलपदं व्यर्थं वैदिकानामाचारस्यापि सदाचारत्वादिति वाच्यं प्रथमतो वैदिकाचारस्य प्राशस्त्यकीर्त्तनार्थं मनुना तदभिहितम्। अतएव ब्रह्मसूत्रे 'अतिस्त्वित-रजूज्यायो लिङ्गाच्चेति' (३/४/३६) सूत्रेण सदाचारिणाम् आश्रमाचाररहित्यापेक्षया आश्रमाचारस्य प्राशस्त्यं कीर्त्यते। तस्मादेव मनुना पश्चात् सामान्यरूपेण तस्य वैफल्य-प्रदर्शनार्थम्-

'वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्' (२/१२)

इत्यत्र शीलपदपरिहारः क्रियते। तथैव व्याख्यातञ्चात्र कुल्लूकभट्टेन यथा-'इदानीं शीलस्याचार एवान्तर्भावाद् वेदमूलकतैव तन्त्रं न स्मृति शीलादि-प्रकार-नियम इति दर्शयितुं चतुर्धा धर्मप्रमाणमाह वेद इति। वेदा धर्मे प्रमाणं स च क्वचित् प्रत्यक्षः, क्वचित् स्मृत्याद्यनुमित इत्येव तात्पर्य्यम्। सदाचारः शिष्टाचारः। इति।।२०

तथैवाह याज्ञवल्क्यः -

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतमिति।। (१/७)

एतावता स्मृत्यादेः सदाचारस्य च वेदमूलकत्वेनैव प्रामाण्यं प्रदर्शितम्। अधुना वेदादावदृष्ठानां विकल्पितानां, सन्दिग्धानां वा विषयाणां धर्माधर्मत्व निरूपणाय मनुना पुनरुच्यते-आत्मन स्तुष्टिरेव चेति। अत्रापि पूर्वतः साधूनामिति सम्बध्यते। स्वस्मै साधवे विचारबुद्ध्या यो रोचते धर्मरूपेण स एव धर्मो मन्तव्य इत्यर्थः। अन्यथा चौर्य्यं चौराय रोचत इति चौर्य्यमपि चौरस्य धर्म्यं स्यात् अत एव यथार्थमुक्तं

महाकविना कालिदासेन-सतां हि सन्देह-पदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय' इति।।२१

यद्यपि 'वैकल्पिके आत्मतुष्टिः प्रमाणमिति' गर्गवचनात् वैकल्पिकमात्र विषये एव आत्मतुष्टेः प्रामाण्यं स्वीकार्य्यं नतु सन्दिग्ध-विषये? तथापि तत्र वैकल्पिकपदं सन्दिग्धविषयाणामप्युपलक्षणम्। अन्यथा तद्विषयाणां धर्माधर्मत्व निरूपणस्योपायान्तराभावेन मनूक्तं चतुर्धा धर्मप्रमाणं व्याहन्येत। अतएव मनुनैव पश्चादुच्यते-

'यत् कर्म कुर्वतोऽस्य परितोषोऽन्तरात्मनः।
तत् प्रयत्नेन कुर्वीत विपरीतन्तु वर्जयेत्।। इति (४/१६१)।। २२

एते च सदाचारादयः श्रुतिविहितधर्माविरुद्धाश्चेत् धर्मे प्रमीयन्ते, नतु तद्विरुद्धाः। 'देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणमिति'-गौतम-वचनोक्त देशधर्मादीनां मनूक्त सदाचारत्वादि स्वरूपत्वात्। नचैषां सदाचारत्वादि-स्वरूपत्वे प्रमाणाभाव इति वाच्यं 'देशधर्मजातिधर्मकुलधर्माणां श्रुत्यभावादब्रवीन्मनुरिति'-वशिष्ठवचनात् देशधर्मादीनां श्रुत्यनुक्तत्वं मन्वभिहितत्वञ्चावगम्यते किन्तु,

'देशधर्मान् जातिधर्मान् कुलधर्मांश्च शाश्वतान्
पाषन्डगणधर्मांश्च शास्त्रेऽस्मिन्नुक्तवान् मनुः।। (१/११८) - इति

मनुवचने देशधर्मादीनां प्रथमतः प्रतिज्ञादर्शनेऽपि उत्तरग्रन्थे तेषाम् अदर्शनात् न्यूनतापरिहाराय मनूक्तसदाचारादिग्राह्यतैव तेषामवश्यं स्वीकर्त्तव्या। अन्यथैषां यथेच्छाचारत्वप्राप्त्या स्वत एवाप्रामाण्यं स्यात् किमाम्नायाविरोधित्वेनेति।।२३।।

अथ शिष्टानामवैदिकानामाचारस्यापि सदाचारत्वेन प्रामाण्यं प्राक् प्रदर्शितम्। तादृशाचारस्य वेदाद्यनुक्तत्वात् वेदाचारभिन्नत्वेन सदाचारादीनां तादृशां स्वत एव वेद-विरुद्धत्वमिति कथमुक्तमाम्नायाविरोधित्वेन प्रामाण्यमेषामिति चेन्न आम्नायविरुद्धत्वं हि न वेदाद्यनुक्तत्वं वेदबाह्याचारत्वं वा। सदाचारादीनामप्रामाण्यापत्तेः। न हि वेदविरुद्धाः केऽप्याचारा धर्मे प्रमीयन्ते। 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति जैमिनिसूत्रात् -

श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी।

अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सता।। इति जाबालवचनाच्च तथोपलब्धेः। अतो वेदनिषिद्धत्वमेव तत्। यथा-'मा हिंस्यात् सर्वा भूतानि' 'न कलञ्जं भक्षयेत्' इत्यादि श्रुत्या प्राणिहिंसनकलञ्जभक्षणादयो ये केचन वेदविरुद्धा आचाराः कुत्रचिद् देशादौ धर्मबुद्ध्या यद्याचरिताः स्यु नैतादृशा देशाद्याचारा सदाचाररूपेण धर्मपदवाच्या भवेयुरिति शास्त्र तात्पर्य्यं पर्य्यवसितम्। किन्तु यज्ञार्थं प्राणिहिंसनस्य धर्मत्वं यथा स्यात् तथोपरिष्ठात् प्रदर्शयिष्यते।।२४।।

धर्मस्य प्रतिष्ठानिर्णयः।

एतावता वैदिकधर्मस्य लक्षणमाकरस्थानानि चोक्तानि। इदानीं तस्य प्रतिष्ठानिर्णयार्थं यतिष्ये। धर्मो हि द्विविधः-नैतिको वैश्वासिकश्चेति प्रोक्तं प्राक्। तत्र नैतिकधर्मो हि-यस्याचरणादभ्युदयः प्रत्यक्षमेवानुभूयते स एव। यथा-अहिंसा। सर्वथा हिंसावर्जनेनैव जगति शान्तिरुन्नतिश्च विधीयते। दुर्वलस्योत्पीड़नेन प्रबलस्य शान्तिरुन्नतिर्वा न चिरं स्थायिनीति प्रबल-दुर्बलानां सकलानामेव परस्परमहिंसा-जनितमैत्रभावेन सहावस्थानादेव जगतः सुस्थिति र्दृश्यते। एषैवाहिंस्या मा हिंस्यात् सर्वा भूतानीति श्रुतिनिरूपिता सर्वधर्ममूलत्व मात्मनः प्रकाश्यति। अतएवोक्तं महाभारते शान्ति पर्वणि-

अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम्।
यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः। (१०६/१२)।।२५

तदर्थश्च-अहिंसासाधनार्थमेव वेदादौ धर्मनिर्णयः क्रियते। यद् यदहिंसा-संयुक्त कर्म सर्वमेव तद् धर्मपदवाच्यमिति भावः। तेन नीतिमूलका विश्वास-मूलका वा ये ये धर्माः शास्त्रेषु निरूपिता स्ते सर्व एव श्रुत्युक्ताया अहिंसायाः साक्षात्-परम्परा साधारण साध्यसाधनादिरूपेण सम्बन्धितया तन्मूलका भवन्ति। तथाहि हिंसायाः प्राक् पीड़नार्थकत्वप्रतिपादनात् परकीय पीड़ोत्पादनेन हिंसासमानार्थानामनृत-स्तेयादीनां विरुद्धस्वभावा ये ये सत्यास्तेयादयस्ते हि हिंसाविरोधिन्याः अहिंसायाः स्वरूपभेदप्रदर्शनाय नीतिधर्मेषु केवलं नाम्ना पृथक् परिचिताः। तथाचोक्तम्-'अहिंसा सत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः इति (२/७०) पातञ्जलसूत्रस्य भाष्ये व्यासेन।।२६

'तत्राहिंसा सर्वथा सर्वदा भूतानामनभिद्रोहः, उत्तरे च यमनियमास्तन्मूला स्तत्-सिद्धिपरतया तत्प्रतिपादनाय प्रतिपाद्यन्ते। तदवदातरूपकरणायैव उपादीयन्त इति।

तदर्थो हि-उत्तरे अहिंसोत्तरे अहिंसाया परं वर्णिता इत्यर्थः। यमाश्च नियमाश्च ते। यमाः-अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहाः प्रागुक्ताः। नियमाः-शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः। (२/३२) इत्युत्तरसूत्रोक्ताः। तन्मूला अहिंसामूलाः तत्सिद्धिपरतया अहिंसासिद्धिपरतया। तत्प्रतिपादनाय अहिंसास्थिरीकरणाय। प्रतिपाद्यन्ते व्यवस्थाप्यन्ते। तदवदातरूपकरणाय तस्या अहिंसाया नैर्मल्यकरणाय। उपादीयन्ते अनुष्ठीयन्त इति।।२६।।

एतेन निर्मलीक्रियते यमनियमाभ्यामहिंसेति स्थितम्। सैव चित्तनैर्मल्य-सहकारितया आत्मसाक्षात्कारपर्यन्तपरमार्थसाधिकेति सत्त्वशुद्धिसौमनस्यैकाग्रेन्द्रि-यजयात्मदर्शनयोग्यत्वानि चेति (२/४१) सूत्रे पातञ्जले स्फुटम्। अतो नैतिकधर्मा वैश्वासिकधर्मा वा सर्व एव साक्षात् सम्बन्धेन परम्परासम्बन्धेन वा अहिंसामूला भवन्ति।।२७।।

वैधहिंसाविचारः।

'अथ श्येनेनाभिचरन् यजेत' इत्यादि श्रुत्या हिंसामूलकाभिचारकर्मणोऽपि वेदविहितधर्मत्वेन कथमहिंसा सर्वधर्मप्रतिष्ठेति चेन्न अत्र स्मार्त्तप्रवर रघुनन्दन भट्टाचार्यपादा हि-"श्येनेनाभिचरन् यजेत" इत्यत्र श्येनस्य शत्रुबधरूपेष्टसाधन-त्वमवगतम्, 'अभिचारो मूलकर्म च' इति मनुना उपपातकगणनमध्ये पाठादनिष्ठ-साधनत्वमवगतम्, तदेतत् कथमुपपद्यतामिति चेन्मैवम् 'आततायिनमायान्तं हन्यादेवा-बिचारयन्' (मनु) इत्येकवाक्यतया आततायिस्थले इष्टसाधनत्वम्, अनाततायिस्थले तूपपातकत्वेन बलवदनिष्ट साधनत्वमित्यविरोध इति"-प्राहुः।।२८।।

अथ तथापि सर्वथा हिंसावर्जनमसम्भवमेव, हिंसायाः प्राक् प्राणिहननोत्-पीड़नादिक्लेशजनककर्मार्थकत्वमिति प्रतिपादनात् एकस्योपकृतावप्यपरस्य प्रायशोऽपकृतिसम्भवेन हिंसैव भवति इत्युपकार कर्मण्यपि हिंसा सर्वथा न परिह्रीयते का कथान्यकर्मणि। किं बहुना-प्राणिनां जीवनयात्रापि तथात्वे दुर्वहा स्यात्। तथाहि-

अन्तःसंज्ञा भवन्त्येते सुखदुःख समन्विताः।। (१/४६)

इति मनुवचने शस्यादि खाद्यजातानामपि प्राणित्व कीर्त्तनात् जीवनरक्षार्थ-मपरिहार्य्यभोजनादिव्यापारेऽप्यहरहः ज्ञानाज्ञानकृतासंख्यप्राणिहत्या सम्पद्यते। आचार्य्य

जगदीशवसुभिर्वैज्ञानिकै रप्यधुना यन्त्रसाहाय्येन शस्यादीनां सुखदु:खादिबोधं प्रदर्श्य पूर्वोक्त मनुवचनस्य यथार्थता प्रतिपादिता चेति कथमुक्तमहिंसैव सर्वधर्मप्रतिष्ठा ? तथात्वे वा कथं जनै स्तादृशो धर्मः प्रतिपालयितुं शक्यत इति चेदत्रोच्यते–।।२९।।

कर्ममात्रस्य प्रायेण धर्माधर्मद्वन्द्वात्मकतया अपरिहार्य्यहिंसा न दूष्यते। परन्तु सा अहिंसेति गण्यते। अतो 'मा हिंस्यादित्यादि श्रुतिवाक्यस्य केवलमवैधहिंसा विषयकत्वात् सैव वर्जनीयेति तात्पर्य्यम्। तथाचोक्तं मनुना–

'यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा।
यज्ञोऽस्य भूत्यै सर्वस्य तस्माद् यज्ञे बधोऽबधः।।
ओषध्यः पशवो वृक्षा स्तिर्य्यञ्च पक्षिणस्तथा।
यथार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः।।
नावेदविहितां हिंसामापद्यपि समाचरेत्।
या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे।।
अहिंसामेव तां विद्याद् वेदाद् धर्मो हि निर्वभौ।। इति'
(५अः)।।३०।।

अतो भोजनादावपरिहार्य्यशस्यादिप्राणिघातो यज्ञादौ पशुबधश्च वेद-विहितत्वान्न दोषाय। अतएवोक्तं स्मार्त्तभट्टाचार्य्यपादैः–'मा हिंस्यात् सर्वा भूतानि' इत्यत्र सर्वशब्दस्य व्यापकार्थपरतया एतद्विधिमनुल्लङ्घ्य 'वायव्यं श्वेतमालभेत' इत्यादिविधे र्विषयाप्राप्तेरगत्या वैधातिरिक्त विषयत्वम्। सर्वाः सर्वाणि, 'छन्दसि वा' इत्यनेन तत्पदं सिद्धमिति'। एवम् 'अहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः (८/१५/१)' इति छान्दोग्यश्रुतेरपि शाङ्कर भाष्ये–अन्यत्र तीर्थेभ्यः तीर्थं नाम शास्त्रानुज्ञाविषयः ततोऽन्यत्रेति व्याख्यानदर्शनाच्च तत्समर्थितम्।।३१।।

अपि च यज्ञीयपशुबधस्याहिंसात्वं श्रुत्यादिभिरेव प्रतिपादितं वैष्णवाचार्य्य रामानुजपादैः ब्रह्मसूत्रस्य श्रीभाष्ये 'अशुद्धमिति चेन्न शब्दात्' इति (३/१/२५) सूत्रे। तथाहि–''शब्दात् अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोक प्राप्तिहेतुतया हिंसात्वा-भावशब्दात्। पशो र्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति– 'हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति' इत्यादिकम्। अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदु:खदोऽपि न हिंसा, प्रत्युत रक्षणमेव। तथाच मन्त्रवर्णः–'नवा उ एतन्

म्रियसे, न रिष्यसि, देवान् इदेषि पथिभिः सुगेभिः। यत्र यन्ति सुकृतो नापि दुष्कृत स्तत्र त्वा देवः सविता दधातु। (यजुः-२/६/६/४६) इति।' चिकित्सकञ्च तादात्मि-काल्पदु:खकारिणमपि रक्षकमेव वदन्ति पूजयन्ति च तज्ज्ञा इति।''।।३२।।

भगवता शङ्कराचार्य्येणापि तत्रोक्तम्-''न हिंस्यात् सर्वा भूतानि' इति शास्त्रमेव भूतविषयायां हिंसायामधर्म इत्यवगमयति। वाढ़म्, उत्सर्गस्तु सः। अयञ्चापवादः-'अग्नीषोमीयं पशुमालभेत' इति। उत्सर्गापवादयोश्च व्यवस्थितविषयत्वमिति।।''

तथा च कर्मणो धर्मत्वमधर्मत्वं वा हिताहित फलतारतम्यद्वारैव निरूपणीय मित्यर्थः पर्य्यवस्यति।

इदञ्चातीन्द्रिय धर्मविज्ञाने प्रमाणान्तराप्राप्तेः शास्त्रमेव प्रमाणमित्यनु-सारेणोक्तम्। भगवता शङ्कराचार्य्येणापि स्पष्टत स्तथैवोक्तं तत्रैव। यथा-'शास्त्रहेतुत्वाद् धर्माधर्मविज्ञानस्य। अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणमतीन्द्रियत्वात्, तयोरनियतदेशकालनिमित्तत्वाच्च। यस्मिन् देशे काले निमित्ते च यो धर्मोऽनुष्ठीयते स एव देशकालनिमित्तान्तरेष्वधर्मो भवति।।'' इति (३/१/२५)।।३३।। अन्यथा येन मनुना प्राक्-

'पञ्च सूना गृहस्थस्य चुल्ली पेषन्युपस्करः।
कन्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्।।
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्च क्लिप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्।।
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो वलि र्भौतो नृयज्ञोऽतिथिपूजनम्।।
पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः।
स गृहेऽपि वसन्नित्यं सूनादोषै र्न लिप्यते।। (३/६८-७१)

इत्यादिवचनैरतितुच्छापरिहार्य्यकीटपतङ्गादिबधेऽपिदोषमाविष्कुर्वता-

'शक्तितोऽपचमानेभ्यो दातव्यं गृहमेधिना।
संविभागश्च भूतेभ्यः कर्त्तव्योऽनुपरोधतः।।' (४/७२)

इत्येनन दरिद्राद्यसमर्थजनेभ्यः कीटपतङ्गादिप्राणिभ्यश्चापि प्राणरक्षार्थमाहार्य्य-

दानमुपदिशता च अहिंसादयादाक्षिण्यादिनिष्ठाया: परां काष्ठां प्रदर्श्य कथमधुना 'तस्माद् यज्ञे बधोऽबध: (५/३९) इत्यादिना यज्ञीय पशुबधात्मिकाया महत्या हिंसाया अहिंसात्वं घोषयितुं शक्यते? अत: कर्मणोऽतीन्द्रियफलानां प्रत्यक्षा-योग्यतया तज्ज्ञापक वेदप्रमाणेनैव वेदविहितहिंसाया हितत्वमुपलभ्य तस्या: धर्मत्वमभिहितं मन्वादिभि:। तस्मात् ये हि यज्ञीयपशुबधेऽपि करुणापरायणा: हिंसात्व-दोषदर्शिन स्ते सर्वत्र नूनं न सूक्ष्मदर्शिनो भवन्तीति तत्त्वम्।।३४।।

अपि च भगवद् गीतायामर्जुनं प्रति भगवता-

धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते।
अथ चेत् त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
तत: स्वधर्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि।। (२/३१-३३)

इत्युक्तस्य धर्म्ययुद्धस्य शास्त्रसम्मतत्वात् तदकरणे प्रत्यवाय घोषणाच्च तत्रापि प्राणिहत्या अहिंसादि धर्ममूलैव भवति। अतएवोक्तं महाभारते शान्तिपर्वणि-

एकं हत्वा यदि कुले शिष्टानां स्यादनामयम्।
कुलं हत्वा च राष्ट्रे च न तद् वृत्तोपघातकम्।।
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप।
धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता।। (३३ अध्याय:)।।

तथा पातञ्जलसूत्रस्य भाष्ये सत्यधर्मस्यापि धर्माधर्मत्व निर्णयार्थं व्यासेनोक्तम्-

'सत्यं यथार्थे वाङ्मनसी, यथा दृष्टं यथानुमितं यथाश्रुतं तथा वाङ्मनश्चेति। परत्र स्वबोधसंक्रान्तये वाग् उक्ता। सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिबन्ध्या वा भवेदित्येषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय। यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यात् न सत्यं भवेत्, पापमेव भवेत्। तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतमं प्राप्नुयात्। तेन परीक्ष्य सर्वभूतहितं सत्यं ब्रूयादिति।। (२/३०)।'

एषां सारार्थश्च-अहिंसाद्यात्मकधर्मस्य स्वरूपनिर्णय: केवलं नाकृत्या, परन्त्वभ्युदयसाधकप्रकृत्यैव। तथा च-बहूनां हिताय स्वल्पहिंसाद्यधर्मोऽपि धर्म एव। एवं बह्वहितजनकत्वे स्वल्पहितात्मकश्चाहिंसादिधर्मोऽप्यधर्म एवेति तयोर्बलाबल विचारेण धर्माधर्मनिर्णय: कार्य्य:। अतएवोक्तं भारते-धर्मस्य तत्त्वं

निहितं गुहायामिति। अतो वेदविहितहिंसा न दोषाय भवतीत्यहिंसाया: धर्मप्रतिष्ठात्वं न व्याहन्यते।।३६।।

किं बहुना-केवलमहिंसादिनीतिधर्मपालनादपि सर्वधर्माचरणफलं लब्धुं शक्नुयात् चित्तनैर्मल्यसाधकत्वात्। तथाचोक्तं याज्ञवल्क्येन-

'अहिंसा सत्यमस्तेयं शौचमिन्द्रिय निग्रहः।
दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम्।।
सत्यमस्तेयमक्रोधो ह्रीः शौचं धी धृति दमः।
संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः।।' (३-अ:)।। इति

एतै: सत्यादिभिरनुष्ठितै: सर्वो धर्मोऽनुष्ठितो भवतीति तट्टीकायां मिताक्षरायां व्याख्यातञ्च।।३७।।

अतो नायं वैदिकधर्म आचारसर्वस्व:, परन्तु भवति च हितमात्रलक्ष्यक:। वेदबोधितेष्टसाधनताको धर्म इत्यादि धर्मलक्षणेष्वपि तथैव प्रतीते:। धर्मीयाचाराणां लक्ष्यभूततथाविधहितमात्रजनकत्वादेव धर्मत्वस्वीकारेण नैतिकाचार प्रतिपालन द्वारापि धर्मरक्षा सम्भाव्यते। लोकेऽपि दृश्यते-ईश्वरादिविश्वासमूलकं किमपि धर्मानुष्ठान-मकुर्वन्नपि कश्चिदहिंसा दया दाक्षिण्यादि गुणोपेतश्चेत् जनैः स श्रद्धया धार्मिकोऽय-मित्युच्यते। किन्तु वर्णाश्रमाद्याचारं सर्वमाचरन्नपि हिंसानृतनिष्ठुरतादिदोषोपेतश्चेत् अधार्मिकोऽयमित्यश्रद्धाभाजनं भवतीत्यन्वय-व्यतिरेकाभ्यामपि अहिंसादय एव सर्वधर्म प्रतिष्ठा इति समर्थ्यते। सत्यादीनामपि अहिंसामूलकत्वादहिंसैव एका सर्वधर्मप्रतिष्ठेति दिक्।।३८।। एतावता नैतिकधर्मात्मिकाया अहिंसाया धर्मप्रतिष्ठात्वं प्रतिष्ठितम्। इदानीं नैतिक-धर्मादन्यश्च यो वैश्वासिको धर्म स्तस्य विशेष: कथ्यते।

वैश्वासिकधर्मश्च यादृशेन विश्वासेन अलौकिकफलकं यादृशं कर्मानुष्ठी-यते तादृशं कर्मैवेत्यर्थ:। तस्य विश्वासाभिधा श्रद्धैव प्रधाना प्रतिष्ठा वेदितव्या। आस्तिक्यबुद्धिर्हि श्रद्धा। वेदानां वेदोक्तानामीश्वरादीनाञ्च अस्तित्वे दृढविश्वास इत्यर्थ:। तादृशीं श्रद्धां विना प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इति न्यायात् अतीन्द्रियफले क्लेशजनकोपासनादि कर्मणि कस्यापि प्रवृत्ति र्न स्यात्, अश्रद्धया वा प्रवृत्तस्य कर्मणि फलाभावाच्च। तथाचोक्तं भगवद् गीतायाम्-

'अश्रद्धया हुतं दत्तं तप स्तप्तं कृतञ्च यत्।

असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह।।' इति

एवं श्रुतावपि-'श्रद्धया विद्यया आत्मानमन्विष्येदिति'। (प्रश्न-१/१०) आत्मदर्शनात्मकप्रधानधर्मानुष्ठानस्यापि श्रद्धासाध्यत्वात्, श्रद्धया विना उपासनादयो वैश्वासिकधर्मा अहिंसां विना सत्यादयो नैतिकधर्मा इव विफलीभवन्ति इति श्रद्धैव तेषां प्रतिष्ठा स्वीकर्त्तव्या। बौद्धखृष्टादिसर्वधर्म सम्प्रदायानामप्यत्र विरोधाभाव इति।।३९।।

वैदिकेतर खृष्टादिधर्मशास्त्रेषु अहिंसादे र्नैतिकधर्मस्य कर्त्तव्यतास्वीकारेऽपि स न धर्मतया गण्यते। तेषां मते केवलमीश्वरादिविश्वासमूलका ह्याचारा स्तत्तच्छास्त्रोक्ता धर्मपद वाच्या भवन्ति। तेषामयमभिप्रायः-'धर्मो हि तत्तच्छास्त्रेषु यथा निरूपितः कदापि तस्य स्वरूपपरिवर्त्तनं भवितुं नार्हति। सर्वत्र सर्वदायं धर्म एकरूपतया आचरित एव हितकारी भवति। अत स्तत्तद् धर्मीयाचाराणां परिवर्त्तने कस्यापि स्वातन्त्र्यं नास्तीति प्रायेण सर्वत्रैकरूपेणाद्यापि आचर्य्यते। अहिंसादि नैतिकाचाराणान्तु लोकहितजनकत्वेऽपि निमित्तादिभेदेन क्वचित् क्वचिदहितकारितया दुष्टत्वादस्थिर स्वभावा नैते नैतिकाचारा धर्मपदवाच्या भवन्तीति।४०।।

तेषां मतानुसारेणैव तत्तच्छास्त्रायाचारभेदमनुसृत्य हिन्दु खृष्ट-महम्मदादि-सम्प्रदायसंज्ञाभि र्धर्माः पृथक् पृथक् परिकल्प्यन्ते जनैः। किन्तु वैदिकमते सर्वत्रैव 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति लक्षणमाश्रित्यैव धर्मसंज्ञायाः स्थितत्वाद् हिन्दु खृष्टादि साम्प्रदायिकसंज्ञाभि र्नासौ भिद्यत इत्युक्तं प्राक्। अतो यथा अहिंसा-दिनैतिकाचाराहिताहितजनकतया क्वचिच्चाधर्मा भवन्ति तथा देशकाल निमित्तादिभेदेन हिताहितजनकतया वैश्वासिकाचाराणामपि क्वचिद् धर्मत्वं क्वचिच्चाधर्मत्वमपि दृश्यते। यथा-मातुलकन्याविवाहस्य शास्त्र निषिद्धत्वेऽपि देशविशेषे प्रशस्तकल्पतया धर्मत्वं स्वीक्रियते। हिमाचलराज्ये जातिविशेषे पान्डवानामिव सोदराणामेकपत्नी-ग्रहणमद्यापि धर्म्यबुद्ध्याचर्य्यते। एवं नरमेधाश्वमेधादयो यागा वेदोक्त धर्मा अपि 'नरमेधाश्वमेधिकौ। एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः। निवर्त्तितानि कर्माणि व्यवस्थापूर्वकं बुधैरिति।' 'समयश्चापि साधूनां प्रमाणं वेदवद् भवेदिति च स्मृतेः कलिकाले अधर्मा भवन्ति। तथाविधस्थले नैतिकानां वैश्वासिकानाञ्च द्विविधा-

नामेवाचाराणां धर्माधर्मत्वनिश्चयस्य क्वचित् क्वचित् विचारसापेक्षत्वात् तर्कोऽपि तत्र प्रमीयते। तथाचोक्तं मनुना-

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।। (१२/१०६) इति'

एवम्- 'केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः।
युक्तिहीन विचारे तु धर्महानिः प्रजायते।।' इति च स्मृतेः।

अतएवोक्तम्-'न धर्मवचनं वाचा नैव बुद्ध्येति नः श्रुतम्।
इति बार्हस्पत्यं ज्ञानं प्रोवाच मघवा स्वयम्।।
लोकयात्रामिहैके तु धर्मं प्राहु र्मणीषिणः।
समुद्दिष्टं सतां धर्मं स्वयमूहेत पन्डितः।।'

इति (महा-शान्ति-१४२अः)

अस्य नीलकण्ठव्याख्या-('वाचा केवलया बुद्ध्या तर्केण वा केवलेन धर्मवचनं धर्मनिश्चयो नास्ति। अपितु समुच्चिताभ्यामुभाभ्यामेव धर्मनिर्णय इत्यर्थः। एके मुख्याचार्य्या इहलोके लोकयात्रां तन्निर्वाहकमेव धर्मं प्राहुः। सा च चोरादीनां वधमन्तरेण न सम्भवतीति अवश्यं हिंसापि कर्त्तव्येति।'

अर्थात्-आत्मरक्षावत् लोकरक्षापि तुल्ययुक्तया धर्म्या स्वीकर्त्तव्या। तन्निर्णयार्थं शास्त्रतर्काभ्यां सुनिपुणं विचार्य्य विद्वद्भिर्यदनुष्ठेयत्वेन आवश्यकं मन्यते तद् वेदादावुक्तमनुक्तं वास्तु सर्वमेव श्रेयः साधनत्वेन धर्मतया परिगण्यत इति भावः। किन्तु सर्वथा वेदनिषिद्धा आचारा अधर्मा एवेति प्रागुक्तं स्मर्त्तव्यमेवेति।।४१।।

वैदिका द्विविधानामेव आचारात्मक धर्माणामित्थम्भूतनीतेरेव नित्यतामपरिवृत्तिताञ्च स्वीकुर्वन्ति नतु तत्स्वरूपस्य। अतः शाखाभेदेन वैदिकधर्मेषु बहुविधाचारपार्थक्यसत्त्वेऽपि परस्परं सर्व एव सर्वं श्रद्दधति नत्वन्याचारं जुगुप्सन्ते। तत एवाचारमात्रस्याभ्युदयकारकत्वपक्ष एव धर्मत्वमनभ्युदयकारकत्वपक्षे चाधर्मत्वं स्वीकुर्वद्भि वैदिकै वैश्वासिकाचारस्येव नैतिकाचारस्यापि समानरूपत्वात् धर्मत्वं स्वीक्रियते।

अपि च खृष्टादिधर्मेष्वपि द्वित्राः शाखा दृश्यन्त एव। प्रतिशाखमाचारभेदोऽपि अल्पशो दृश्यते च। अतो वैश्वासिकाचारोऽपि तैः कदाचित् परिवर्त्तित इति द्विविधयोराचारयोर्धर्माधर्मत्वस्वीकारे बाधाभाव इति।।४२।।

## वैदिकधर्मे शाखाभेदाः।

वैदिका वेदवाक्यमीश्वरवाक्यरूपं विश्वसन्ति। ते हि वेदवाक्यानुसारेण ईश्वरे परलोकादौ च विश्वासितया तादृशविश्वासानुकूलाचारवन्तो भवन्ति। वैदिक भाषायां नानार्थशब्दप्राचुर्य्येण अतीन्द्रियविषयज्ञापकतया च एकस्यैव वाक्यस्य विभिन्नार्थप्रकाशसम्भवात्, अनेकत्र परस्परविरुद्धार्थवदवभासनाच्च तत्तदर्थसङ्गतये वाक्यघटकयोः पदार्थयो र्यथार्थाभेदस्थले रूपककल्पनाया रूपकस्थले चाभेदकल्प-नायाः सुकरत्वात् स्वस्वविचारबुद्ध्या तत्तदर्थावधारणे प्रायशः सर्वे नैकतात्पर्य्यग्राहिणो भवन्तीति तत्तद्व्याख्याभेदेन एकस्मिन् विषयेऽपि धर्मविश्वासो बहुधा भिद्यते। विश्वासभेदादाचारभेदोऽपि सुतरां भवत्येव। सर्व एव स्वकीयामेव श्रुतिव्याख्यां प्रशंसन्ति, निन्दन्ति च परकीयामिति। यथोक्तं ब्रह्मसूत्रभ्याष्ये भगवता शङ्कराचार्य्येण-

'सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्यान्यपि उदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते। तेषां यद् व्याख्यानं तद् व्याख्यानाभासं न सम्यग् व्याख्यानमिति (२/२/१)।' ।।४३।।

किं बहुना-वेदनिन्दाकारिणः स्वतन्त्राचारा बौद्धा अपि श्रुतिप्रमाणमवलम्ब्य 'एके बुद्धिरात्मेति' अन्ये च शून्यमात्मेति वदन्ति। तथाचोक्तं वेदान्तसारे-''बौद्ध स्तु 'अन्योऽन्तर आत्मा विज्ञानमयः' इत्यादिश्रुतेः कर्त्तुरभावे करणस्य शक्तयभावात् अहं कर्त्ता अहं भोक्ता इत्याद्यनुभवाच्च 'बुद्धिरात्मेति' वदति। अपरो बौद्धः- 'असदेवेदमग्र आसीदित्यादि' श्रुतेः सुषुप्तौ सर्वाभावात् अहं सुप्तः सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति। इति।''

एवं श्रुतिबलेन सुगतस्य सर्वज्ञतां समर्थयन्त स्तद्धर्मावलम्बिनो बौद्धा अपि प्रकारान्तरेण श्रुतिशरणा जाताः। तथाचोक्तः बौद्धाचार्य्य शान्तरक्षित विरचिते तत्त्व-संग्रहे-'सुगतस्य सार्वज्ञे श्रुतेरपि प्रामाण्यम्-

निमित्तनाम्नि सर्वज्ञो भगवान् मुनिसत्तमः।
शाखान्तरे हि विस्पष्टं पठ्यते ब्राह्मणै र्बुधैः।। इति' (३५११)

अस्य व्याख्यायां कमलशीलः-'तथाहि निमित्तं नाम शाखान्तरमस्ति, तत्र स्फुटतरमयमेव भगवान् शाक्यमुनिः सर्वज्ञः पठ्यते। तत् किमिति मूढ़ै र्वेदं प्रमाण-यद्भिरपि भवद्भिरसौ प्रतिक्षिप्यते इति।'।।४४।।

इत्थं भारतीयधर्मसम्प्रदायाः सर्व एव स्वमतसमर्थनाय श्रुतिवाक्यमुदाहृत्य स्वानुकूलव्याख्याबलादेव स्वमतं प्रतिष्ठापितवन्तः। श्रुतिसमर्थनशून्याः केऽपि धर्म स्तदानीं न बभूवु र्भारतीयग्राह्याः। अतो भारतीयधर्मसम्प्रदायानां सर्वेषामासीत् श्रुतिश्रद्धा समानेति। बौद्धादीनां यत्र तु वेदनिन्दा दृश्यते तत्र च तन्मते-'तत्तदंश-विशेषस्य न वैधविषयज्ञापकत्वमपितु धर्माभासपरत्वमेवेति उद्देश्यतया तत्तन्निन्द वाक्यात् प्रकारान्तरेण स्वधर्मप्रशंसापरत्व एव तेषां तात्पर्य्यं नतु समग्रवेदनिन्दायाम् न हि निन्दा केवलं निन्द्यमेव निन्दितुं प्रवर्त्तते क्वचित्तु तदितरत् प्रशंसितुमपीति न्यायादिति।।४५।।

अतएव वैदिकयज्ञादिनिन्दाकारिणो वेदबाह्याचारस्यापि शौद्धदने र्बुद्धदेवस्य धर्मोऽहिंसादिसाधारणधर्मानुगुणतया तपोध्यानादिविशेषधर्मानुग्रहतया च लोकहितैक लक्ष्यसमत्वात् वैदिकैरपि वेदसम्मतत्वबुद्ध्या न निन्द्यते प्रत्युत विष्णववतारकल्पनया स बुद्धः समाद्रियते सर्वत्र स्तूयते च। तथाचोक्तं भगवद् भक्त जयदेव विरचित गीतगोविन्दे दशावतारस्तोत्रे-

निन्दसि यज्ञविधेरहह श्रुतिजातं सदयहृदय दर्शित-पशुघातम्।
केशव धृतबुद्धशरीर जय जगदीश हरे।।' इति।

इत्थमेव वैदिका वैश्वासिकधर्मेऽपि सम्प्रदायादिभेदेन उपासनाङ्गस्य तत्तदा-चारभेदस्य 'तं यथयथोपासते तदेव भवति'-इति महदुदार श्रुतिवाक्य- समर्थितत्वात् कामपि निन्दामकृत्वा सर्वत्रैव श्रद्धापरायणा भवन्ति। अतएव आश्रमाचाररहितानामपि जपतपोध्यानभगवदुपासनादिविशेषधर्मेण निर्वाणादिसिद्धिरपि प्रतिपादिता भगवता ब्रह्मसूत्रे व्यासेन। तथैव व्याख्याता च भाष्यकृद्भिराचार्य्य प्रमुखैः।।४६।।

वर्णाश्रमधर्मस्य विकल्पधर्मः।

तथाहि-'अन्तरा चापि तु तद् दृष्टेः (३/४/३६) इति सूत्रस्य शङ्करभाष्ये-

"अनाश्रमित्त्वेनान्तराले वर्त्तमानोऽपि विद्यायामधिक्रियते। कुतः? तद् दृष्टेः रैक्क-वाचक्नवीप्रभृतीनामेवम्भूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेरिति।' एवं तत्रैव 'विशेषानुग्रहश्चेति' (३/४/३८) इति सूत्रस्य भाष्ये-'तेषामपि विधुरादीनामविरुद्धैः पुरुषमात्रसम्बन्धिभिर्जपोपवासदेवताराधनादिभिर्धर्म विशेषैरनुग्रहो विद्याया भवति। तथाच स्मृतिः -

जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः।
कुर्य्यादन्यन्नवा कुर्य्यान् मैत्रो ब्राह्मण उच्यते।। (मनु-२/८७)
तस्माद् विधुरादीनामपि अधिकारो न विरुध्यत इति।''

जप्येनैवेत्यादिवचनं शङ्खेन गायत्र्याः मनुविष्णुभ्याञ्च प्रणवस्य गायत्र्याश्च द्वयोरेव जपप्रशंसायामुक्तमपि अत्र भाष्यकाराणां 'पुरुषमात्रसम्बन्धिभि' रित्याद्युक्तौ मन्त्रविशेषाश्रवणात् विधिबोधित-मुक्तिपर्य्यन्तसाधनसमर्थ-मन्त्र-मात्र जपस्यैव फलज्ञापकम् इदं वेदितव्यम्। एवम् अनयोक्त्या जातिधर्मनिर्विशेण जपादि यत्किञ्चित् सार्ववर्णिकधर्मानुष्ठानेनापि चरमसिद्धिब्रह्मज्ञानोदयपर्य्यन्तं साधयितुं शक्यते जनैरित्यपि भाष्यकृदाशयः सूच्यते।।४७।।

एवमनयोः सूत्रयोः श्रीभाष्ये च-

''तद्-दृष्टेः-दृश्यते हि रैक्कभीष्म सम्वर्त्तादीनामनाश्रमिणामपि ब्रह्मविद्या-निष्ठत्वम्। न चाश्रमधर्मैरेव विद्यानुग्रह इति शक्यं वक्तुम्-'यज्ञेन दानेन तपसानाशकेन (वृह ६/४/२२)' इति दानादीनामाश्रमेषु अनैकान्तिकानामपि अनुग्राहकत्वदर्शनात्। यथा ऊद्ध्वरेतःसु ब्रह्मविद्यानिष्ठत्वदर्शनात् आश्रमानियतै र्जपोपवासदेवताराधनादि-भिर्विद्यानुग्रहः शक्यते कर्त्तुम् (३/४/३६)।..... न केवलं न्यायस्मृतिभ्यामयमर्थः साधनीयः, श्रूयते च अनाश्रमनियतै र्धर्मविशेषै र्विद्यानुग्रहः-'तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययात्मानमन्विष्येत्। (प्रश्न-१/१०) इति (३/४/३८)।'

अपि च-'तं यथायथोपासते तदेव भवति' इति श्रुतेः
'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।।' इति (गीता)

एवम्-'यस्य यावांश्च विश्वास स्तस्य सिद्धिश्च तावती।' इति (गारुड़े) स्मृतेश्च भक्तिश्रद्धादीनामातिशय्येनापि भगवदनुग्रहात् सर्वाः सिद्धयः साधयितुं शक्यन्त इति।।४८।।

एतेन यथायथमाश्रमधर्मस्य सम्यक् प्रतिपालनासम्भवे आश्रमानियतै र्जपोपवासभक्त्यादि सर्वसाधारणधर्मैरपि आश्रमधर्मफलं लब्धुं शक्नुयादिति सूच्यते।

भक्तिर्हि ध्यानविशेषः। 'प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति स्मृतेः।

श्रद्धा चास्तिक्यबुद्धिरित्युक्तं प्राक्। भाष्योक्त-विद्यानुग्रहश्च विद्याया स्तत्त्वज्ञानस्य आत्मनः साक्षात्कारानुभवस्य इति यावत्। अनुग्रहः उत्पत्तिरित्यर्थः। ब्रह्मवित्त्वं तत्त्ववित्त्वञ्च नार्थान्तरम्।

धर्मानुष्ठानस्य द्वे लक्ष्ये-उन्नति र्मुक्तिश्चेति। यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति लक्षणात्। तत्र मुक्तिरेवातिदुःसाध्या, तस्याः सिद्धौ प्रधानमल्लनिवर्हण न्यायेन अन्याः सिद्धयः सुतरां सुसिद्धा एवेति मन्यमानै र्भाष्यकृद्भिरत्र विशेष-धर्मानुष्ठानस्य प्रधान फलं मुक्तिजनकं ब्रह्मज्ञानमेव केवलमुदाहृतम्। वस्तुतः श्रद्धया जपादिभिर्विशेषधर्मैः सिद्धयः सर्वाः साधयितुं शक्यन्ते भगवदनुग्रहादित्येव तत्त्वम्।।

एतेन जपध्यानादिविशेषधर्मै र्द्विजानामिव शूद्राणामपि ब्रह्मज्ञानपर्य्यन्ताधिगमे बाधाभावः सूच्यते। अतएव विदुर-धर्मव्याधप्रभृतीनां ब्रह्मविद्यानिष्ठत्वं दृश्यते स्मृतौ।।४६।।

शूद्राणां ब्रह्मविद्याधिकारः।

अथ ब्रह्मसूत्रे अपशूद्राधिकरणे 'शूद्रस्य तदनादरश्रवणात् तदा द्रवणात् सूच्यते हि' (१/३/३३) इत्यादि सूत्रैः शूद्रस्य ब्रह्मविद्यायामनधिकार प्रतिपादनाद् भाष्यकृद्भि स्तथैव व्याख्यातत्वाच्च कथमिदानीमुच्यते जपादिविशेषधर्मैः शूद्राणामपि ब्रह्मविद्यानुग्रह इति मैवं शूद्राणां वेदानधिकारात् वेदाध्ययनमाध्यमेन यद् ब्रह्मज्ञानं तदेव ब्रह्मसूत्रे निषिध्यते। किन्तु ध्यानादिना ध्येयपदार्थ-साक्षात्कारे जात्यादे र्नियमाभावात्, भगवदुपासनादिना उपायान्तरेण वा ब्रह्मजिज्ञासायामुदितायां ध्यानादिना शूद्रादेरपि ब्रह्मज्ञानं न विरुध्यते। अतएवाचार्य्यः शङ्करोऽपि तत्रैव तत्समाधानमाह 'स्मृतेश्चेति' (१/३/३८)-इति सूत्रस्य भाष्ये। तथाहि-'येषां पुनः पूर्वकृतसंस्कार-वशात् विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्ति स्तेषां न शक्यते फलप्राप्ति प्रतिबन्धुं ज्ञानस्यैकान्तिकत्वात्। 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकार स्मरणात्। वेदपूर्वकस्तु नाधिकारः शूद्राणामिति स्थितमिति।।५०।।

अस्य सारार्थो हि-विदुरादिशूद्राणां प्राक्तनद्विजातिजन्मज तत्त्वज्ञानस्य अविस्मरणहेतुना एतज्जन्मनि वा पुराणादिश्रवणहेतुना ब्रह्मजिज्ञासायामुदितायां ध्यानादिभि र्ब्रह्मविद्यानुग्रहः सम्भवत्येव। किन्तु वेदोक्तप्रकारेण वेदश्रवणाध्ययना-दिहेतुना शूद्राणां स न भवत्येव अनधिकारात्। 'वेदपूर्वकस्तु' इत्यत्र पक्षान्तरव्यावर्त्तकेन

'तु' शब्देन तथैव प्रतीतेः।

यद्यपि रामानुजपादैः शाङ्करमतखन्डनावसरे ब्रह्मसूत्रस्य 'स्मृतेश्च'-इति सूत्रस्य (१/३/३६) भाष्ये आपत्तिपक्षे-

'ये तु निर्विशेषचिन्मात्रंब्रह्मैव परमार्थः, अन्यत् सर्वं मिथ्याभूतम्...इति वदन्ति तै र्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते।...शूद्रस्यापि विविदिषायां जातायां पौरुषेय वाक्यात् निदिध्यासनादिभिर्विपरीत वासनायां निरस्तायां ज्ञानमुत्पत्स्यते, तेनैवापरमार्थिको बन्धो निवर्त्तिष्यते। अनेनैव ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेः उपनिषच्च तपस्विनी दत्तजलाञ्जलिः स्यादिति'-ग्रन्थेन शूद्राणां ब्रह्मज्ञानोत्पत्तिम् अस्मन्नयेनैव प्रदर्श्य सिद्धान्तपक्षे-।।५१।।

'यस्य तु मोक्षसाधनतया वेदान्तवाक्यै र्विहितं ज्ञानमुपासनारूपं तच्च परब्रह्मभूतपरमपुरुषप्रीणनम् एवं रूपोपासनाप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्य ज्ञानदानेन कर्मजनिताज्ञानं नाशयन् बन्धान् मोचयतीति' सन्दर्भेण स्वमते उपनीताधीतवेदस्य पुरुषस्य तत्त्वमस्यादि वेदान्तवाक्यजन्य ज्ञानेनैव भगवदुपासनरूपेण भगवान् परमप्रीतः सन् भक्ताय तस्मै कृपया सविशेषब्रह्मज्ञानमेव मोक्षकारणं ददाति, नत्वन्यविधेन उपासनादिप्रकारेणेति शूद्रस्य उपनयनाद्यभावात् वेदानधिकारेण ब्रह्मज्ञानाधिकारः खन्डित एव तथापि उत्तर ग्रन्थे 'अन्तरा चापि तु तद् दृष्टेः' (३/४/३६) इति सूत्रस्य भाष्ये स्वयमेव तेन 'आश्रमानियतैर्जपोपवासदेवताराधनादिभिर्विद्यानुग्रहः शक्यते कर्त्तम्' इत्युक्त्या स्वमतविरुद्धमस्मन्मतं प्रकारान्तरेण अजानतैव स्वीकृतं हि, शूद्राणां जपादिकर्मणि निषेधाभावात्। तथाचोक्तं गौतमीये तन्त्रोक्तविधिपूर्वन्तु शूद्रः सन्ध्यां समाचरेत्' अतः जपोपवासादयो यथा आश्रमानियता स्तथा जात्यनियमिता अपीति जपादिभिः सर्वसाधारणधर्मैः शूद्रा अपि ब्रह्मज्ञानं लब्धुं शक्नुयुरेव।।५२।।

अपि च 'तं यथायथोपासते तथैव भवति' इति स्वभाष्यधृतश्रुतिवाक्ये (३/३/५२) यथायथेति द्विरुक्ते र्व्यापकार्थपरतया उपासनायां स्वरूपत उपायतो वा ये ये प्रकाराः सर्वेषामेव तेषां ग्रहणात् तमुपास्यं यथा यादृशेन श्रद्धाख्य विश्वासेन यथा यादृशेन उपायेन च उपासते उपासकाः तथा तादृशविश्वासानुरूपमेव तथा तादृशेन उपायेन एवेष्टफलं भवतीत्यर्थावगमात्। अत्र यथायथेत्यनेन यावन्तः प्रकारा विवक्षिता एकेनापि तथेतिपदेन तावन्तः प्रकारा एव परामृश्यन्त इति अनेन जपाद्युपायेन

अवश्यमेव भगवदनुग्रहाद् ब्रह्मज्ञानं लब्धुं शक्नुयामिति दृढ़श्रद्धयानुष्ठितै र्जपादिभि शूद्रादीनामपि ब्रह्मज्ञानसिद्धिम् एकलब्यस्य द्रोणप्रतिमाराधनया धनुर्विद्यासिद्धिमि श्रुतिरेवेयं प्रमाणयति चेति।

यच्च श्रीभाष्ये निरर्थकत्वमाशङ्क्य उपनिषत् तपस्विनी शुच्यते तद तुच्छम्-'अतस्त्वितरज् ज्यायो लिङ्गाच्चेति' सूत्रे अनाश्रमित्वापेक्षया आश्रमित्वस प्राशस्त्यप्रदर्शनेन यथा तस्य सार्थक्यमभिहितं तथा ब्रह्मविद्योत्पत्तौ पुराणाद्यु पद्धतिमपेक्ष्य उपनिषदुक्त-पद्धतिरेव द्विजातिपक्षे प्रशस्तेति तस्याः सार्थक्यं दर्शयि शक्यते। इति।।५३।।

गुणगतजातिसिद्धिः।

इदमत्रावधेयम्-यद्यपि जन्मनैव जातयो भिद्यन्ते तथापि वेदानधिकारे शूद्रा गुणा एव हेतवो नतु कुलम्। तथाहि-'पद्यु हवा एतच्छ्मशानं यच्छूद्रः तस्मात् शूद्रसमी नाध्येतव्यम्' इति शङ्करभाष्यादिधृतायां श्रुतौ (१/३/३८) पदविचरणक्षममेत श्मशानमेव शूद्र इति रूपककल्पनया तदानीं शूद्रस्य क्रूरकर्मत्वादि भयङ्करत्वमासीदिति प्रदर्श्य, तस्माद् हेतोः शूद्रसमीपे नाध्येतव्यमित्युपसंहारात एवं 'तस्मात् शूद्रो बहुपशुरयज्ञीयः' इत्यपरश्रुतावपि तत्र तस्मात् हेतोः शूद्रो बहुपश पशुकल्पः। 'विभाषा सुपो वहुच् पुरस्तात्तु' (पाणिनि-५/३/६८)-इति सूत्रे ईषदसमाप्त्यर्थे वहुच् प्रत्ययः। अतएव, अयज्ञीयः यज्ञानर्हतया वेदानधिकारी।-इ ज्ञापनाच्चेति।।५४।।

एतेन वैदिकयुगीयशूद्रा आधुनिक शूद्राश्च समाननामानोऽपि नैकपर्य्या मन्तव्याः। वैदिकयुगे ये ये शूद्रत्वेनाभिहिता स्ते सर्वे शिक्षाबुद्धिदया दाक्षिण्यादि गुणरहिततया परनिर्भरं विना स्थातुमसमर्थाः पशव इव धर्माधर्मज्ञान हीना आसन अतएव श्रुतावुक्तं 'बहुपशुरिति'। किन्त्वाधुनिकशूद्रेषु बहवः शिक्षादिगुणसम्पन्न परहितव्रतिनो धर्मपरायणाश्चेति तद्विपरीता भवन्ति। तेन पशुकल्पत्वादिज्ञापि तमोगुणाच्छन्नत्वमेव शूद्राणां वेदानधिकारे कारणम्। अतः 'शूद्र' इति नाममात्र श्रवणादेव आधुनिकशूद्रेषु सर्वेष्वेव वेदानधिकारविधानं न सङ्गच्छते। उक्तयोरनय श्रुतिवाक्ययोः शूद्राणां पक्षतया वेदाधिकाराभावस्य साध्यतया पशुकल्पत्वादि ज्ञापिततमोगुणाच्छन्नत्वस्य हेतुतया च निर्देशात् यत्र यत्र तादृशहेतु दृश्येत तत्र तत्रै

वेदानधिकारो बोद्धव्यः। यथा पर्वतो वह्निमान् धूमादित्यनुमितौ यत्र पर्वते धूमदर्शनं स्यात् तत्पर्वत एव वह्न्यनुमितिर्जायेत, नतु धूमशून्य पर्वते हेत्वसिद्धेः। तथा यत्र यत्र तमोगुणाच्छन्नत्वं तत्रैव वेदानधिकारो भवितु मर्हति। अतएव न केवलं तथाविध तमोगुणाच्छन्ने शूद्र एव वेदानधिकारः साध्यते अपितु तथाविधतमोगुणाच्छन्ने द्विजेऽप्यविशेषादिति शास्त्रकृतामभिप्रायो बोद्धव्यः।।५५।।

अतएव 'विभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति' इति (१/१/२६८) भारतवाक्यात्

'विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत्।।
विद्या ब्राह्मणमेत्याह शेवधि स्तेऽस्मि रक्ष माम्।।' इति

मनुवचनात् (२/११३) 'विद्यया सार्द्धं म्रियेत न विद्यामुषरे वपेत्।' इति

कुल्लूकभट्टधृत श्रुतेश्च वेदार्थबोधासमर्थत्वात् अल्पज्ञानवते, अपवित्रचित्ताय, अतीक्ष्ण बुद्धये च जनाय वेदविद्यादानं निषिध्यते, न तु शूद्रत्वेन, जातिविशेषयेति बोध्यते।

आसीच्च दोष स्तदानीं शूद्राणां क्रूरस्वभावत्वं वेदाचारहीनत्वं तमोगुणाच्छन्नत्वञ्चेति शूद्रपदेन तथाविधशूद्र एवात्र धर्त्तव्यः नतु शूद्रयोनिमात्रम्। तथा चोक्तं महाभारते शूद्रवर्णनावसरे-

सर्वभक्ष्य रति र्नित्यं सर्वकर्मकरोऽशुचिः
त्यक्तवेद स्त्वनाचारः सर्वै शूद्र इति स्मृतः।। इति
(शान्ति १८९ अः)

एवं वशिष्ठेनापि-

दीर्घवैरमसूयाञ्च असत्यं ब्रह्मदूषणम्।
पैशुन्यं निर्दयत्वञ्च जानीयाच्छूद्रलक्षणम्।। (६) इति

अतएव मनुनापि तादृशशूद्रमभिलक्ष्यैव-

न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति।
नास्याधिकारो धर्मेऽस्ति न धर्मात् प्रतिषेधनम्।। (१०/१२६)

इत्यनेन तथाविध शूद्राणां हिताहित ज्ञानशून्यत्वात् पशुतुल्यत्वेन तत्पक्षे धर्मीय-विधिनिषेधाभावं प्रदर्श्य पश्चात्-

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुष्ठिताः।
मन्त्रवर्जं न दूष्यन्ति प्रशंसां प्राप्नुवन्ति च।। (१०/१२७)

इत्यनेन सदाचारवतां शूद्राणां पक्षे धर्मभावोद्रेकात् विहितधर्मकृत्य मुपदिष्टम्। केवलं तदानीमपि तेषां वेदग्रहणयोग्यता नार्जितेति मन्त्रवर्जमित्युक्तमिति विशेषः।।५६।।

सदाचार शूद्राणां वेदाधिकारः।

अथ वेदानधिकारे शूद्राणां यदि गुणा एव हेतवः स्युर्न जन्म, तदा सदाचारवतां शूद्राणामपि सत्त्वगुण स्वभावत्वात् वेदाधिकारोऽस्तु इति चेत्

ओमिति ब्रूमः। यथा नृसिंहतापनीय श्रुतौ-

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयो र्नेच्छन्ति। सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रो यदि जानीयात् स मृतोऽधो गच्छति (यजुः वेदः। लक्ष्मीः श्रीवीजमित्यर्थः इति तन्त्रसारः) इत्यनेन स्त्रीशूद्रयो र्द्वयोरेव वेदाधिकाराभावे तुल्येऽपि गार्गी-मैत्रेयी प्रभृतीनामुपनिषत्सु ब्रह्मवादिनीनां, सत्त्वगुणोत्कर्षात् वेदाधिकारो दृश्यत इति तत्सहचरित शूद्रस्यापि सत्त्वगुणोत्कर्षे सति वेदाधिकारो भवितुमर्हति।

अतएव भारते विदुरधर्मव्याधयोरेव शूद्रयो र्ब्रह्मज्ञताकीर्त्तनेन तयो र्वेदाधिकारः स्वीकृत एवेति।।५७।।

वैदिकयुगे जात्युचित गुणानां जातिसमनियतत्व सत्त्वात् गुणं दृष्ट्वा जातिं जातिं दृष्ट्वा वा गुणस्य निर्णयः सुकर आसीत्। यथोक्तं मनुना वर्णसङ्कराणां वर्णनिर्णयावसरे-

'वर्णापेतमविज्ञातं नरं कलुष योनिजम्।
आर्य्य रूपामिवानार्य्यं कर्मभिः स्वैर्विभावयेत्।।
अनार्य्यता निष्ठुरता क्रूरता निष्क्रियात्मता।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम्।। (१०/५७-५८) इति

तथा छान्दोग्येऽपि-अज्ञात कुलं जाबालसुतं सत्यकामं तदीय सत्यनिष्ठाया 'ब्राह्मणोऽयम्' इति निश्चित्याचार्य्यो गौतम स्तमुपनीय वेदमनुशशासेति दर्शनाच्च। तदानीं शूद्रकुलोत्पन्नमात्र एव तमो गुणाच्छन्नत्वसत्त्वात् शूद्रत्व निश्चयेन तत्र तदुचिततमोगुण प्राधान्येन हेतुना कलुष चेतसा शूद्रेण वेदाधिकारः प्राप्यते चेत् तदा निगूढ़वेदार्थस्य यथार्थज्ञानं सम्यग् उपलब्धुमसमर्थतया आपातमधुरां तदीय विकृत व्याख्यामनुसृत्य अधर्म प्रचार द्वारा तेन जगतोऽहितोत्पादनं क्रियते। यथा अस्त्रविद्या पारदर्शित्वं धर्मपरायणेषु राजन्यादिषु प्रजानां विपत्तारण द्वारा भवति परमहिताय परन्तु पापासक्तचेतःसु च कल्प्यते विनाशायेति। यथा वा वीर्य्यवत्तमं भेषजमेकं सुप्रयुक्तं चेत् रोगिणां प्राणरक्षायै, दुष्प्रयुक्तं सत् तदेव भवति प्राणनाशायेति च विचिन्त्य तदानीं सर्वज्ञानाकरस्य वेदस्याधिकारः शूद्राय न प्रदत्तो वैदिकैः।।५८।।

किन्त्विदानीं क्रमशो जातिसाङ्कर्य्यादि कारणैः जातिगुणयोः तथाविध समनैयत्या भावात् इन्द्रियातीत सूक्ष्म गुणगत जाति निर्णयस्य उपायान्तराभावेन, 'कारण गुणाः कार्य्यगुणमारभन्त' इति न्यायात् पित्रोर्गुणाः अंशतस्तदपत्ये वर्त्तन्ते एवेति युक्तिमाश्रित्य जन्मगत जातिमात्रेनैव शूद्रस्यापाततः वेदानधिकारः कल्पितोऽपि वस्तुतो जन्मगत जातिवादिनां मतेऽपि शूद्रस्य वेदानधिकारो गुणत एव विचार्य्यते न तु जन्मतः। अत एव तस्मात् शूद्र समीपे नाध्येतव्यम्, 'तस्माद् बहुपशुरयज्ञीयः, इत्यादिश्रुतौ तस्मादित्यनेन तमोगुणाच्छन्नत्वादिरूपकारण निर्देशो युज्यत इत्युक्तं प्रागपि।।५६।।

गुणगत जातिवादिनस्तु-'प्रथमतो जगति सर्वे एकवर्णा आसन्, पश्चाद् गुणकर्मानुसारेण तेषां वर्णविभागोऽभवत्। तथा चोक्तं भगवता गीतायाम्-'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'' इति। एवं महाभारते-'तेषां विविध वर्णानां कुतो वर्णविनिश्चयः'-इति प्रश्नस्य उत्तर दानावसरे भृगुणा उक्तम्- (शान्ति-१८८-१८६)

'न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।

ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्।। इत्युपक्रम्य

हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः।

कृष्णाः शौच परिभ्रष्टा स्ते द्विजाः शूद्रतां गताः।

❖ इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती।
विहिता ब्रह्मणा पूर्वं लोभात् त्वज्ञानतां गताः।।
सर्वभक्ष्य रतिर्नित्यं सर्वकर्मकरोऽशुचिः।
त्यक्तवेद स्त्वनाचारः स वै शूद्र इति स्मृतः।।
शूद्रे चैतद् भवेल्लक्ष्यं द्विजे तच्च न विद्यते।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः।। इति।।
एतदेवाक्षरशोऽभिन्नं प्रायेण पाद्मे स्वर्गखण्डेऽपि दृश्यते।।

एतावता 'प्रथमं सर्वे वेदाचारिण एकवर्णा ब्राह्मणा आसन्, पश्चात् गुणहीनतया क्रमशः क्षत्रियादयो विभक्ताः। तेषु अत्यधिकमधःपतिता स्तमोगुणाच्छन्न एव शूद्रा अभवन्निति त एव वेदे नाधिकारिणो जाताः, नतु द्विजातयः तस्मात् जन्मगत शूद्र एव शूद्रः, अथवा जन्मगतब्राह्मण एव ब्राह्मण इति कल्पयितुं न शक्यते। किन्तु तत्तद् गुण परीक्षयैव शूद्रो ब्राह्मणो वा निर्णेतव्यः' -इत्याद्यर्थ पर्य्यवसानात् जन्मगतजाति र्न स्वीकार्य्या।

अथात्र-ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रोऽजायत।।

इति श्रुत्या ब्राह्मणादि वर्णानां सृष्ट्यादौ स्पष्टत एव ब्रह्मणो मुखाद्यवयव-जातत्वप्रतीते र्जन्म गत जातिरेव स्वीकार्य्या नतु गुणगतेति चेत् मैवम्-अस्याः श्रुते अस्य ब्रह्मणो ब्रह्माण्ड देहिनो विराट्पुरुषस्य, ब्राह्मणः ब्रह्म वेदं परब्रह्म च वेत्ती ब्रह्मज्ञो ब्राह्मणाभिधः सम्प्रदायः, मुखं ज्ञानेन्द्रियाधार मुख स्वरूपः आसीत् कल्पि इति भावः। राजन्यः सुशासनादिना प्रजारञ्जकः क्षत्रियाभिधः सम्प्रदायः बाहू प्रभुत्व व्यञ्जक बलाधार बाहुद्वय स्वरूपः, कृतः कल्पितः। वैश्यः पशुकृष्यादिकर्म प्रवेशका तथाचोक्तं पाद्मे-विशत्याशु पशुभ्यश्च कृष्यादानरुचिः शुचिः वेदाध्ययन सम्पन्न स वैश्य इति संज्ञितः।। इति वैश्याभिधः सम्प्रदायः, ऊरू स्थितिशीलताज्ञापको-रुद्वयस्वरूपः कल्पितः। एवं शूद्रः हीनगुणत्वात् शोकार्हः, छान्दोग्ये जानश्रुतिनामा

❖ अत्र नीलकण्ठः-चतुरः चत्वारः। ब्राह्मी वेदमयी। चतुर्णामपि वर्णान ब्रह्मणा पूर्वं विहिता, लोभ दोषेण त्वज्ञानतां तमोभावं गताः शूद्रा अनधिकारिणो वेदे जाता इत्यर्थः।

राजानं शोकार्हतार्थकत्वेनैव शूद्र संज्ञयाभिहितवानिति दर्शनात् शूद्राभिधः सम्प्रदायः। पद्भ्यां सञ्चरणशीलता ज्ञापक पदद्वयात् अजायत तादृश पद द्वयस्वरूपः कल्पित इत्यर्थत्वात्।।६१।।

एतेन सृष्टेरनन्तरं मानवाः स्वस्वयोग्यतानुसारेण कर्मविभागार्थं तत्तद्गुणकर्मभिश्चतुर्धा विभक्ता अभवन्। ते च यथाक्रमं बुद्धिजीविनः, प्रभुत्वजीविनः, धनजीविनः, श्रमजीविनश्चेति। तत्र बुद्धिजीविनो ब्राह्मणा ज्ञानचर्चया सर्वेषां ज्ञानसञ्चारं, प्रभुत्व-जीविनः क्षत्रिया बाहुबलेन प्रजारक्षणादिकं, धनजीविनो वैश्याः पशुपालन-कृषिकर्मादिना धनोत्पादनं, श्रमजीविनः शूद्राश्च कायिक परिश्रमादिना सर्वेषां सर्वकर्मसु साहाय्यं शिल्पोत्पादनञ्च कुर्वन्त श्चत्वारो वर्णा एव यौथचेष्टया मानवसमाजस्य स्थितिशीलतां सुस्थताञ्च सम्पादयामासुः। यथा मुखाद्यवयवा हस्तपदाद्येकतररहिताश्चेत् न सुस्थतया अवस्थातुं शक्नुवति तथा चत्वारो वर्णा अपि परस्पर साहाय्यं विनेति अस्याः श्रुते स्तात्पर्य्यं रूपकव्याजेन प्रकाशितम्। अत्र रूपककल्पनां विना कीटपतङ्गादि विश्वशरीरिणः विराट् पुरुषस्य वास्तव मुखाद्यवयवकल्पना न युज्यत इति नेयं श्रुतिरस्मन्मतविरोधिनीति वदन्ति नव्याः।

वस्तुतः प्रथमतो गुणसमनियतत्वात् जाति र्गुणानुगता जन्मानुगता वेति निरर्थकोऽयं विवादः। यथैवास्तु जातिविभागस्य मुख्यप्रयोजनं हि-सर्वेषां सर्वसु कर्मसु योग्यत्वाभावात् स्वस्वयोग्यतानुसारेण तत्तत्कर्मविभागज्ञापनार्थमेवेति।।६२।।

तथाचोक्तं भगवता गीतायाम्-

ब्राह्मण क्षत्रिय विशां शूद्राणाञ्च परन्तप।
कर्माणि प्रविभक्तानि स्वभाव प्रभवैर्गुणैः।।
शमो दम स्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।
शौर्य्यं तेजो धृति र्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।।
कृषिगोरक्ष वाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्य्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।।१८/४१-४५।।

अपिच वर्ण धर्मवर्णनावसरे मनुना चोक्तम्–

अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट् कर्माण्यग्रजन्मनः।।
षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः।।
शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषि र्विशः।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः।।
अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम्।
पुत्र दारात्ययं प्राप्तो जीवेत् कारुक कर्मभिः। इति (१०/७६)

एतैश्च वचनैरापाततो द्विजातिशुश्रूषा शूद्राणां जीविका बोधिकापि परमार्थतः पुण्यजनिकैव सा। क्वचिद् क्वचित् उपजीविकास्वरूपापि मुख्यजीविका तु तेष शिल्प कर्माण्येव। तथाचोक्तं विष्णुना–'अथैतेषां वृत्तयः–ब्राह्मणस्य याजन प्रतिग्रहौ .......शूद्रस्य सर्वशिल्पानि। आपद्यनन्तरा वृत्तिः इति (२ अः)।। मनुनाप्यन्यत्र–

'विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्।

शुश्रूषैव तु शूद्रस्य धर्मो नैःश्रेयसः परः (६/३३४) इत्युक्तत्वाच्च।

अतः 'शुश्रूषा ब्राह्मणानाञ्च राज्ञां श्रेयस्करं परम् (७/८८) इति

मनुना ब्राह्मण शुश्रूषा राज्ञां यथा पुण्यजनिका कथिता तथा शूद्राणामपि द्विजाति शुश्रूषा बोद्धव्येति।।६३।।

एतावता कर्मविभागार्थमेव तत्तत्कर्मयोग्यतानुगतगुणविचारेण जातयो भिद्यन्त इति प्रतीयते। उत्तरकाले क्रमशः वर्णसाङ्कर्य्यादिदोषेण जन्मगत–जातिगुणयोस्तथाविध समनैयत्याभावात् जन्मनः परमतीन्द्रिय सूक्ष्मगुणनिर्णयस्य उपायाभावेन तद्द्वारा जातिनिर्णयस्य दुष्करत्वाच्च मतद्वयेऽप्यगत्या तदानीं प्रत्यक्ष ग्राह्य जन्मनैव योनिगत जातिरापाततः स्वीकृतापि तत्तत्जात्युचितकर्म सम्पादनार्थमद्यापि प्राधान्येन गुण एवापेक्ष्यन्ते, न जातिः। नहि अविद्यामधार्मिकं वा कमपि ब्राह्मणं विद्याधर्मजिज्ञासया केऽपि व्रजन्ति। परन्तु शूद्रादीनपि विदुषो धर्मज्ञान् ब्राह्मणादयो विदुर धर्मव्याध प्रमुखानिव ज्ञानधर्मजिज्ञासया सर्वदा समागच्छन्ति। तथाचोक्तं मनुना–

श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि।।

इत्यतः सर्वत्रैव कर्माधिकारे गुणपक्षपातिता वर्त्तत एव। अतो रज-उपसर्जन तमःस्वभावेषु सत्त्वगुण प्रभवस्य ब्रह्मज्ञानादेरधिकारिता नोपयुज्यत इति यथार्थ शूद्राणां वेदानधिकारो नायौक्तिकः। किन्त्वत्र वेदानधिकारे शूद्रपदेन तादृशतमोगुणाच्छन्न जन एव बोद्धव्यः, नतु शूद्रयोनिमात्रमित्यसकृत् वदामः। एवं रीत्या अन्यत्रापि यत्र यत्र जातिवाचक ब्राह्मण शूद्र म्लेच्छादिपदानां प्रयोगा धर्मीयविधिनिषेधयो र्दृश्यन्ते; सर्वत्रैव तत्तद् गुणवति जनमात्र एव तदर्थः, नतु तज्जन्मगत जातिमात्र इत्येव तत्त्वम्।।६४।।

यच्च पूर्ववदधुनापि शूद्रयोनिमात्रे वेदानधिकारः कल्प्यते, तत्रायं हेतुः- जन्मनः परमेव तदीय गुणनिर्णयस्योपायाभावेन, 'कारणगुणाः कार्य्यगुणमारभन्त' इति न्यायात् जननकाले पित्रो र्गुणा अंशतोऽपत्यमात्रे संक्रमन्त इति पित्रोर्जात्यनुसारेणैव सन्तानस्य जातकर्मादिसंस्काराणां कर्त्तव्यतया वयःप्राप्तावपि यथार्थगुणनिश्चयद्वारा जात्यन्तर परिचयात् प्राक् पर्य्यन्तं गत्यन्तराभावेन जात्युचिताः कर्मयोग्यताः सर्वा जन्मगत जात्यनुसारेनैव कल्प्यन्त इति।

परन्तु कदाचित् काकतालीय न्यायेन सिद्धपुरुषादि माध्यमेन स्वीयालौकिकशक्तिपरिचयादिद्वारा वा जात्यन्तरोचितगुणनिश्चयेन कस्यचिद् योनिविरुद्ध-जाति निश्चयः सम्भाव्यते चेत् तदा तस्य तज्जात्युचिताधिकार स्वीकारेऽधुनापि कार्पण्यं न दृश्यते। तथाहि-युगावतारश्रीरामकृष्ण परमहंसेन सिद्ध महात्मना शूद्र कुलोत्पन्नस्य 'विवेकानन्द' नाम्नाधुना ख्यातस्य 'नरेन्द्रनाथ' नामधेयस्य सत्त्वगुणोत्कर्षं स्वमहिम्ना प्रत्यक्षीकृत्य तस्मै ब्राह्मणजात्युचित सन्नयासाधिकारं प्रदाय पृथिव्यां सर्वत्र वैदिकधर्मप्रचाराय प्रेरणा च प्रदत्ता। अद्यापि भारतीया स्तदन्ये वा बहवः परमश्रद्धया श्रीरामकृष्ण-विवेकानन्द प्रवर्त्तितधर्मपद्धतिमनुसरन्ति। तथा इदानीन्तना अपि सिद्धपुरुषा बहवः शूद्र गुरवः सर्ववर्णानां दृश्यन्ते च। नहि कुत्रापि ते शूद्रजात्यपवादेनाश्रद्धेया अनादरणीया वा भवन्तीति।

अपिच यद्यपि तथाविध शूद्रेभ्यो वेदाधिकारो न दीयते, तथापि वेदव्याख्यान-स्वरूप पुराणादि शास्त्रश्रवणस्याधिकारप्रदानात् वेदसम्बन्धिज्ञानलाभे न वञ्चिता

स्ते। तथाचोक्तं भारते-श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः इति। अज्ञानाच्छन्नतया शूद्राणां पुराणादेरपि विकृतार्थबोधवारणार्थमुक्तम्-'कृत्वा ब्राह्मणमग्रत इति। वेदज्ञ ब्राह्मण माध्यमेन ज्ञातार्थबोधः पुराणं शृणुयादित्यर्थः। एतेन शूद्रमात्रं प्रति वेदादि शास्त्रस्य निष्ठुरतापि न कल्पनीया। इति।।६५।।

## वर्णाश्रमाचार-प्राशस्त्यम्।

अथाश्रमाचार रहितानामपि यदि प्रागुक्तप्रकारै र्जपध्यानप्रभृतिभिराश्रमानियत धर्मविशेषैर्निर्वाण पर्य्यन्तमधिगम्यते तदा निरर्थकोऽयं वैदिकः क्लेशबहुलो वर्णाश्रमाचारः-'अक्के चेन् मधु विन्देत किमर्थं पर्वतं ब्रजेत्' इति न्यायादिति चेन्न 'अतस्त्वितरज्ज्यायो लिङ्गाच्चेति' इति ब्रह्मसूत्रस्य भाष्ये (३/४/३६)

अत स्त्वन्तराल वर्त्तित्वादितरदाश्रम वर्त्तित्वं ज्यायो विद्यासाधनम्। श्रुतिलिङ्गाच्चतेनैति ब्रह्मवित् पुण्यकृत तैजसश्च' इत्यनेन; एवं 'सर्वापेक्षा यज्ञादिश्रुते रश्ववदिति' (३/४/२६), 'सहकारित्वेन चेति' (३/४/३३) चैतयोः सूत्रयो र्भाष्ये- 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तियज्ञेन दानेन तपसानाशकेन' (बृह-६/४/२२) इत्यादि श्रुतिबलात्, कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तत इति स्मृतिबलाच्च विद्योत्पत्तौ प्रतिबन्धकीभूत पापानां विनाशे सहकारित्वमाश्रमकर्मणामिति शङ्कराचार्य्यपादानां सिद्धान्ताच्च अनाश्रमित्वापेक्षया आश्रमधर्मस्य प्राशस्त्यं प्रतिपादितमिति कुत्रापि नासङ्गतिः।।६६।।

## ब्राह्मधर्मादीनामपि वैदिक धर्मत्वम्।

अथ हिन्दुभिराचरितो वर्णाश्रमधर्मोऽयं वेदविहितत्वात् वैदिकधर्मो हिन्दुधर्मो वाभिहितो भवद्भिस्तत्रेदं पृच्छ्यते-वेदविहितवर्णाश्रमाचारे जातिभेदस्वीकारस्यापरिहार्य्यतया 'हिन्दु' स्वरूपेण परिचितेषु ब्राह्मादि सम्प्रदायेषु जातिभेदास्वीकारेण वेदबहिर्भूताचारस्य स्फुटत्वात् तत्तत् साम्प्रदायिक धर्मेषु वैदिक धर्मलक्षणस्य प्रागुक्ताव्याप्तिः कथं वारणीया? यद्यत्र इष्टापत्तिः क्रियते तदैषां हिन्दुत्वाभिधानमपि न सङ्गच्छत इति चेदत्र ब्रूमः-

वैदिकानां मते सर्वेषामेव वर्णानां प्रत्येकमेव स्वजात्यनुसारेण यथाविधानं वर्णाश्रमधर्मः प्रतिपालनीयः। जातिभेदमस्वीकुर्वतां ब्राह्मादीनाम् 'चतुर्थ एक जातिस्तु

शूद्रो नास्तितु पञ्चमः' इति मनुवचनात् शूद्रवर्णत्वेन तद्वर्णोचित वर्णाश्रमधर्म एव तेषां विधीयते। तेषाञ्च उपनयन संस्काराभावेन द्विजातिधर्मेऽनधिकारात् शूद्रादि-सर्ववर्णविहितगार्हस्थ्याश्रमधर्मप्रतिपालनाच्च न वैदिकधर्मविरुद्धता भवितुमर्हति। यच्च ते वैदिकमन्त्रोच्चारणादिकं शूद्रवर्णविरुद्धमाचरन्ति, तदपि सत्त्वगुणोत्कर्षवतां न दोषाय। तेषामाचारस्य सद्भिराचरितत्वात् च वेदानुमोदितत्वं भवितुमर्हति प्राक् प्रतिपादित व्याख्यानवलादिति।।६७।।

विशेषतो ब्राह्मा हि स्वधर्म मूलं वेद एवेति मन्यन्ते, वेदोक्तमन्त्रेण ब्रह्मो-पासनाञ्च कुर्वन्ति, स्वयञ्च वैदिकधर्मिण इति वदन्ति चेति आधुनिका वैदिकधर्मा-वलम्बिनो हिन्दवो यदि प्राक् प्रदर्शितानां प्राचीनगार्हस्थ्याद्याचाराणां बहुलांशवर्जनेन, बहुलांशसंस्कारेण चापि स्वयं वैदिका हिन्दुधर्मभाजो भवितुमर्हन्ति; तदा ब्राह्माणामपि अवैदिकत्वमहिन्दुत्वं वा कल्पयितुं न शक्यते। अपि च ते हि वैदिकधर्मप्रतिष्ठ-भूतमहिंसादिकमेव स्वधर्मश्रद्धाञ्च वैश्वासिकधर्मप्रतिष्ठां स्वीकुर्वन्ति, ब्रह्मविद्यायै ध्यानोपासनादिकञ्चाचरन्तीति स्युरेव 'अन्तरा चापि तु तद् दृष्टेः''विशेषानुग्रहश्चेति' सूत्रद्वयोक्तरीत्या आश्रमाचारभङ्गकारिणो रैक्वभीष्म सम्वर्त्तादयो वैदिका इव जातिभेद मात्रास्वीकारिणो ब्राह्मा अपि ब्रह्मविद्यापर्य्यन्ताधिकारिण इति। तेषाञ्च धर्मीयाचारोऽपि 'अतस्त्वितरज्ज्यायो लिङ्गाच्चेति' सूत्रानुसारेण केवलमप्रशस्ताचार एव वैदिकाचारात् वक्तुं शक्यते नतु निषिद्धाचार इति कथमपि तेषामहिन्दुत्वं न प्रतिपाद्यते।

ये च 'भेक'-धारिणो वैष्णवविशेषाः 'सहजिया'-दयो वा जातिभेदा-स्वीकारिणः स्वकीय धर्मं वेदविहितं मन्यमाना अंशतो भिन्नाचारा वर्त्तन्ते, तेऽपि चानयैव रीत्या वैदिका हिन्दुपद वाच्या भवन्ति।।६८।।

यौ च बौद्धजैनौ वैदिकधर्म वहिर्भूततया कैश्चित् शङ्क्येते तावपि तद्धर्म्मिभिः 'असदेवेदमग्र आसीदित्यादि' श्रुतिवाक्यानां विकृतव्याख्यया शून्यवा-दादिकमाविष्कृत्य तदनुकूलं स्वकीयाचारं प्रकल्प्य प्रतिष्ठापिताविति प्राक् प्रदर्शित युक्तया; 'गौतम बुद्धात् प्राक्द्वाविंशति बुद्धा आविर्भुता' इति बौद्ध वादात्, 'महावीर जिनात् प्राक् त्रयोविंशतिर्जिना अजायन्त, इति जैनवादाञ्च ज्ञायते-गौतमबुद्धात् प्रागेर श्रुतिवाक्यानां व्याख्यान्तर समुद्भूतौ वैदिकधर्माभासौ बौद्धजैनधर्मो जगति प्रतिष्ठतौ, गौतमबुद्धेन महावीरस्वामिना च पश्चात् अस्थिष्य वर्शेण च तावेव संस्कृत्याधुनिक

रूपेण प्रचारिताविति।।६६।।

अपि च ब्रह्मसूत्रेऽपि (२/२ बौद्धजैनवाद निराकरणात्, गौतमबुद्धापेक्षया पूर्व वर्त्तिनि ❖ महाभारते (शान्ति-२१८) बौद्धमतनिरास दर्शनात् तथा भगवद् गीतापर्वणि 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः (१३/४), इत्यत्र ब्रह्मसूत्रग्रन्थस्य नामोल्लेखाच्च महाभारतब्रह्मसूत्रग्रन्थयोः पूर्ववर्त्तिनौ बौद्धजैनधर्मौ ज्ञायेते। अत एतद् धर्मद्वयं प्रथमतः श्रुतिव्याख्यान्तर समुद्भूततया सांख्य पाञ्चरात्रप्रभृतिवत् वैदिकधर्मस्य

---

❖ यद्यपि आधुनिक गवेषकाणाम् 'उइन् टार निज्' प्रमुखाणां पाश्चात्त्य पण्डितानां मते-'इदानीन्तन महाभारताभिध ग्रन्थस्य रचना चतुर्थ खृष्टशताब्द्याः प्राक् न सम्भाव्यते। ग्रन्थादौ प्रतिज्ञात तदीय लक्ष श्लोकापेक्षथा अत्यधिक श्लोक दर्शनेन नाना कविविरचितानां बहुशः श्लोकानामनुप्रवेशः परस्मिन् काले अवश्यमेवात्र स्वीकर्त्तव्यः' इत्युच्यते तच्च न विचारसहम्। तथाहि-

व्यासोक्तं लक्ष श्लोकात्मकं महाभारतं नैमिषारण्ये शौनकस्य द्वादशवार्षिके सत्रे ऋषिभिरेव संग्रथितमिति ग्रन्थोपक्रमे तत्रैव अभिव्यक्तम्। तत्र परस्परं कथोपकथनच्छलेन ऋषिप्रभृतिभिरभिहिताः श्लोकादयः व्यासोक्त लक्ष श्लोकान्तर्भुक्ता न भवन्ति। श्लोकाश्च सर्वत्र पद्यलक्षणाक्रान्ता श्चतुष्पादात्मकाश्च ग्राह्या नतु कुत्रापि द्विपादात्मका गद्यात्मका वा विज्ञेयाः। आधुनिकग्रन्थार्पितानां द्विपादात्मक श्लोकसंख्यानामित्थं संस्कारेण ऋषिप्रभृतिभिरुक्तानां श्लोकानाञ्च वर्जनेन भ्रान्तोऽयं लक्षश्लोकसंख्यातिक्रमः सम्यक् परिहृतो भवतीति मत्सम्पादिते 'लक्षश्लोकरहस्य'-ग्रन्थे युक्तिप्रमाणाभ्यां विशद्य प्रतिपादनात्।

अपिच पाणिनेरष्टाध्यायी ग्रन्थे 'महान्........भार..........भारत........ प्रबृद्धेषु' (६/२/३८), 'गवियुधिभ्यां स्थिरः' (८/३/६५), 'वासुदेवार्जुनाभ्यां वुन्' (४/३/६८) इत्यादिभिः सुत्रैः 'महाभारत'-शब्दस्य तन्नायक-युधिष्ठिर- वासुदेवार्जुनादि शब्दानाञ्च साधुत्व सम्पादनात्; आश्वलायन गृह्यसूत्रस्य ऋषितर्पने 'भारत महाभारत धर्माचार्य्याः' (३/४/४) इत्यत्र भारत महाभारतयोरुल्लेखाच्च पाणिन्याश्वलायनयोः पूर्वतनं महाभारतमिदमवश्यं स्वीकर्त्तव्यमेव। पाणिन्याश्वलायनौ च द्वावेव गौतमबुद्धस्य समसामयिकौ कियत् पूर्ववर्त्तिनौ वेति पुरातत्त्वविदो वदन्ति। अतः कथमपि महाभारतं बुद्धोत्तरकालरचितं वक्तुं न शक्यते। का कथा खृष्टोत्तरकाले

रचितस्य। विस्तरमन्यत् लक्षश्लोकरहस्ये द्रष्टव्यमिति।

शाखान्तरमासीत्। गौतममहावीरयोराविर्भावात् परं वैदिकधर्माद् बहुदूरस्थमपि पूर्वसोदर्य्यभाव स्मरणेनाद्यापि हिन्दव स्तद् धर्मद्वयमात्मीयमेव मन्यन्ते। ताभ्यां सह वैदिक धर्मस्य आचारतो भिन्नत्वेऽपि परस्पर विरोधाभावात् संसारदुःखपरित्राणैक समलक्ष्यतया मैत्रभावाच्च नेदं धर्मद्वयं सर्वथा वैदिकधर्मवहिर्भूतं कल्पयितुं शक्यते। विशेषतः उत्तरग्रन्थे सर्वधर्माणामेव वैदिकधर्माभिन्नत्वं प्रतिपाद्यते च।।७०।।

सर्वधर्माणामभिन्नता।

अथ हिन्दुधर्मस्याकरो वेदः, प्रतिष्ठे द्वे अहिंसाश्रद्धे, तस्यानुष्ठान लक्ष्यञ्च जनानां निर्वाणादिमुक्तिरुन्नतिर्जगतः सुस्थता चेति। लक्ष्यसाधनार्थं वेदानुक्तं भिन्नपथ-मनुधावतां धर्म्यबुद्ध्या वेदविरुद्धं किमपि नाचरतामाचारोऽपि सदाचारत्वेन वेदानुमोदित स्तदवलम्बिनश्च अधार्मिका अवैदिका वा भवितुं नार्हन्तीति प्राक् प्रतिपादितम्। तथा सति अवैदिकानां खृष्टादिधर्मीयाचाराणामपि लक्ष्यसमत्वात् हिंसाद्यधर्मविरोधित्वात् सदाचारत्वाच्च तत्र तत्र हिन्दुधर्म-लक्षणस्यातिव्याप्तिरिति चेदत्रोच्यते-

अस्माकं धर्मशब्दोऽयं सार्वभौमः। नहि तस्य साम्प्रदायिकसंज्ञा काप्यस्ति। वेदमूलकत्वात् हिन्दुभिराचरितत्वाच्च वैदिकधर्मो हिन्दुधर्मो वायमाख्यायते। देशकाल निमित्तादिभेदेन यत्र यथाचारः हितकारितया सद्भिः शिष्टैराचरित स्तत्तदाचारो देश-जातिकुलधर्मादिरूपेण तत्तद्देशादिमात्रविषय एव सदाचारगण्यतया वैदिकै-रप्यनुमोदित इत्युक्तं प्रागपीत्यापत्तिरियमिष्टैव। खृष्टमहम्मदादि सम्प्रदाये वेदानुक्ता द्वित्राद्याचाराः स्वधर्मबुद्ध्या अनुष्ठीयन्त इति वैदिकधर्मात् तत्तद्धर्माः पृथक् किलाभिधीयन्ते। किन्तु वस्तुगत्या सर्वेषां धर्माणां लक्ष्यसमत्वात् मूलगतमैक्यं न व्याहन्यते। येतु स्वकीयाचारं तत्तद्धर्मशास्त्रविहितत्वात् स्वसाम्प्रदायिकमवैदिकञ्च मन्यमानाः परितुष्यन्ति ते तुष्यन्तु नाम; केवलं नामभेदकल्पनायां बाधाभावः। वयन्तु एकस्यैव भगवतः परमेश्वरस्य ब्रह्म-विष्णु-शिव-काली-यिषु-बुद्धाल्लादि विभिन्न-नाम्ना विभिन्नप्रकारेण चोपासनया फलभेदाभावस्य प्राक् प्रपञ्चितत्वात् शाखाभेदेन बहुधा विभक्तमपि 'धर्म' वृक्षमतीन्द्रिय ज्ञानमय शास्त्रैकमूलकत्वाद् 'हित' फलोत्पादनसाम्याच्च सर्वमेवैकमभिन्नं मन्यामह इत्यसकृत् वदामः।।७१।।

## हिन्दुलक्षण निर्णयः

अथ सर्वधर्माणामभिन्नत्वे धर्मीय सम्प्रदायानां धर्मद्वारा परस्पर भेद प्रदर्शनासम्भवेन हिन्दु बौद्ध खृष्टादयः सम्प्रदायाः कथं पृथक् परिचीयन्त इति चेदत्रोच्यते-सर्वेषु धर्मेषु नैतिकधर्माणां स्वरूपेणाभिन्नत्वेऽपि वैश्वासिक धर्माणां स्वरूपतो भेदसक्त्वात् तादृशधर्मभेदमादायैव धर्मीयसम्प्रदायानां प्रत्येकं पार्थक्य निरूप्यते। किन्त्वेषां वैश्वासिक धर्माणामपि प्रदर्शितरीत्या वेदसम्मतत्व सक्त्वात् वेदसम्मताचारत्वरूपेणैव तेषामपि अभिन्नत्त्वं वदामि।

ननु तथापि शैवशाक्ताद्युपासकसम्प्रदायभेदेन हिन्दूनां मध्ये वैश्वासिक-धर्मभेदस्यापि सत्त्वात् हिन्दुसम्प्रदाये वैश्वासिकैक धर्मद्वारा पार्थक्य प्रदर्शनासम्भवेन हिन्दुरिति हिन्दुधर्म इति वा कथं लक्षयितुं शक्यते इति चेन्न अस्मन्मते धर्मीय सम्प्रदायानां लक्षणं न तद्धर्मीयाभिन्नाचारवत्त्वं प्रतिधर्ममेव शाखाभेदेन अल्पशोऽल्पशः आचारभेददर्शनात्, किन्तु तद्धर्मीय मौलिकोपासनानुगताभिन्नाचारवत्त्वमेव तत्। शाखाभेदेन आचारभेदसत्त्वेऽपि सर्वसम्प्रदायेषु तद्धर्मीय मौलिकोपासनायामाचार-भेदाभावात्। खृष्टादिसम्प्रदायेषु वाइवेलादि शास्त्रीयमौलिकोपासनायां यथा अभिन्ना-चारता तथा हिन्दुसम्प्रदायेऽपि वेदशास्त्रीय मौलिकोपासनायामभिन्नाचारता वर्त्तते एवेति दर्शयामि। तथाहि-

'उपासना नाम सगुण ब्रह्मविषयकमानसव्यापाररूपेति' वेदान्तसार व्याख्यानात् (उप+आस्+अन-भावे) उप ब्रह्मसमीपे आस्ते तिष्ठति ययेति व्युत्पत्या ध्यानमाध्यमेन ब्रह्मसमीपावस्थानानुकूलक्रियेति बोधनात् वैदिकी सन्ध्योपासनैव तथा भवति। तथा च तैत्तिरीये-

'उद्यन्तमस्तं यान्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते। असावादित्यो ब्रह्मेति च ब्रह्मैव सन् ब्रह्माभ्येति य एवं वेद' इति।। अस्य माध्वभाष्ये-

'वक्ष्यमाणप्रकारेण प्राणायामादिकं कुर्वन् यथोक्तनामरूपोपेतं सन्ध्याशब्दस्य वाच्यमादित्यं ब्रह्मेति ध्यायन् ऐहिकामुत्रिकञ्च सकलं भद्रमश्नुते। य एवमुक्त ध्यानेन शुद्धान्तःकरणे ब्रह्म साक्षात् कुरुते। पूर्वमपि ब्रह्मैव सन् प्रज्ञावान् चिरजीवित्वं प्राप्तो यथोक्तज्ञानेन अज्ञानोपशमे ब्रह्मैव प्राप्नोति।'

इति व्याख्यानात् प्रत्यक्षप्रतीकं आदित्य ब्रह्मध्यानसंयुक्ता प्राणायामाचमन-सूर्य्योपस्थानादिपूर्विका गायत्रीजपान्ता उपासनैव सन्ध्योपासना, सन्ध्या गायत्री शब्दयोः ब्रह्मवाचकत्वात् ब्रह्मोपासनैव सा। तथाचोक्तम्-

'न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह।
सोऽहमस्मीत्युपासीत विधिना येन केनचित्।।' (व्यास)
'या सन्ध्या सा तु गायत्री द्विधा भूत्वा प्रतिष्ठिता।
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः।।' (याज्ञ)

इति स्मृतेः। एवम्-

अहरहः सन्ध्यामुपासीत इति श्रुतेः
'न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद् वहिष्कार्य्यः सर्वस्माद् द्विजकर्मणः।'' (मनु २/१०३)
'एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते।।' (छान्दोग्यपरि)
'नित्यं नित्यं त्रिसन्ध्याञ्च करिष्यसि दिने दिने।
मध्याह्ने चापि सायाह्ने प्रातरेव शुचिः सदा।।
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदाह्ना कुरुते कर्म न तस्य फलभाग् भवेत्।।' (ब्रह्म वैवर्त्त)

इत्यादिस्मृतेश्च सन्ध्योपासनाया नित्यत्वश्रवणात् वैदिकधर्मिणामवश्य-कर्त्तव्यत्वं प्रतीयते। इमाञ्चोपासनामेव वैदिकधर्मिणः सर्वे वैदिकयुगादारभ्य आकुमारी-हिमालयं यावदखण्डभारतवर्षे प्रायेणैकरूपेणैव अधुनापि समाचरन्ति। शैवशाक्तादिसाम्प्रदायिक वैदिकशाखाधर्मेषु सन्ध्योपासनातिरिक्त विविधोपासना-सत्त्वेऽपि-

'सन्ध्यात्रयं तथा कुर्य्याद् ब्राह्मणो विधिपूर्वकम्।
तन्त्रोक्तविधिपूर्वन्तु शूद्रः सन्ध्यां समाचरेत्।।' (गौतमीयतन्त्र)
'वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगतः।।' (तन्त्रसार)
वैदिकीं तान्त्रिकीं सन्ध्यां ततः कुर्य्यात् समाहितः।।' (शाक्तानन्द)

इत्यादि तान्त्रिकप्रमाणैरपि शाक्तादिशाखाधर्मिणामपि सन्ध्योपासनाया अवश्यकर्त्तव्यत्वस्वीकारादियमुपासनैव वैदिकधर्मिहिन्दूनां मौलिकीति तादृशसन्ध्योपासनाचारशीलत्वमेव हिन्दुसम्प्रदायलक्षणं वेदितव्यम्।

शूद्राणां वैदिकसन्ध्यायामधिकाराभावेऽपि तान्त्रिकसन्ध्यायामधिकारसत्त्वात् सन्ध्ययोर्द्वयोर्मन्त्रादिवैषम्यसत्त्वेऽपि ब्रह्मोपासनानुकूलानां प्राणायामाचमन गायत्रीजपाद्याचाराणामैक्यात्, वक्ष्यमाण सरलोपासनाविधौ वेदादिविहित ब्रह्मबोधकमन्त्रजप मात्रात्मिकायाः सन्ध्योपासनायाः अभिन्नाचाररूपेण शूद्राणामपि विहितत्वाच्च वेदविश्वासिनां हिन्दूनां तद्द्वारैव मौलिकोपासनायामभिन्नाचारशीलत्वं सुस्थितमेव।

यज्ञादिषु वैदिकानां बहुविधाचारसत्त्वेऽपि ब्रह्मसमीपावस्थानोद्देश्यत्वाभावात् नैते उपासनाशब्दवाच्या भवन्ति, किन्तु स्वर्गादिकामनया विहितत्वेन ते काम्यकर्माण्येवेति तत्र तत्र नासङ्गतिः। तान्त्रिकाद्युपासनासु उपासनालक्षणसमन्वयेऽपि सन्ध्योपासनायाः प्राक् तासामकर्त्तव्यत्वात् निष्फलत्वाच्च सन्ध्योपासनैव मौलिकीति प्रतिपद्यते।

रुचिवैचित्रगत् सामर्थ्याभावादन्यस्माद् वा कारणात् येषाञ्च ऋजुपथजुषां यथायथं तथाविधसन्ध्योपासनानुष्ठानं न सम्भाव्यते, तेषां पक्षे ब्रह्मवोधक प्रणवादिमन्त्रजपमात्रात्मिका उपासनापि सरला सन्ध्यानुकल्पत्वेन विधीयते।

तथाचोक्तं मनुना, विष्णुना शङ्खेन चाभिन्नभाषया–

'जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः।
कुर्य्यादन्यन्न वा कुर्य्यान् मैत्रो ब्राह्मण उच्यते।।' इति

अतएव 'सोऽहमस्मीत्युपासीत विधिना येन केनचित्।' इति प्रागुक्त व्यासवचने येन केनापि विधिना गायत्र्युपासना समर्थ्यते। 'तं यथायथोपासते तथैव भवति' इति श्रुतिरपि तत् समर्थयति।

अद्यापि हिन्दूनामनेके तादृशवेदादिवाक्यविश्वासात् अन्ततः पक्षे केवलं मन्त्रजपात्मिकया उपासनयापि आत्मनः। वैदिकोपासनाकारित्वं विश्वसन्ति। एतादृश विश्वास बलादेव हिन्दवः सर्वे वैदिकधर्मीति हिन्दुरिति च स्वपरिचयं प्रकाशयन्ति च। अतो मौलिकोपासनायां हिन्दूनामैक्याद् हिन्दुलक्षणे प्रागुक्ता असङ्गति र्नास्तीति।।७२।।

## अस्पृश्यतावादः।

अथ तथाप्यन्यधर्मावलम्बिनां जातिभेदादिवैदिकाचारमस्वीकुर्वतां धर्मीयाचारोऽपि सदाचारतया वेदानुमोदितोऽप्रशस्ताचार विशेष इति भवतामुक्तयनुसारेण म्लेच्छादीनां धर्मीयाचारस्यापि तथात्वात् तैः सह वैदिकधर्मावलम्बिभिश्चाण्डाला-दिभिश्च वा भोजनादिसंसर्ग दोषेण जातिच्युति धर्मच्युतिपर्य्यन्ता भवद्भि राचरिता कथं सङ्गच्छते? अप्रशस्ताचारस्य प्रशस्ताचारापेक्षया दुर्बलत्वेऽपि दुष्टत्वाभावात्, भोजनादिव्यापारस्य सर्वेषामेव वैधधर्मत्वाच्चेति। अत्रोच्यते-

जगत्सृष्टेः प्रथमावस्थायां सर्व एव मानवा असभ्याः पशुभावापन्नाः कामक्रोधादिदोषोपेताः सर्वधर्मविवर्जिता हिंसास्वभावा आसन्निति प्रत्नतत्त्वविदो वदन्ति। तेषु आर्य्याणां सभ्यताप्राप्तिरपेक्षातः पुरातनी। धर्मप्रवर्त्तकानां मन्वादीनां समय पर्यन्तमनार्य्यभूता म्लेच्छादयो हि मूर्त्तिमन्तः पापावतारा इव सर्वधर्मविवर्जिता यथेच्छाचारिण स्तमःस्वभावा आसन्निति श्रूयते। अतएवोक्तं बौधायनेन-

'गोमांस खादको यश्च विरुद्धं बहु भाषते।
सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते।' इति।

प्रायशस्ते दस्युवृत्तिमाचरन्त आर्य्याणां धनदाराद्यपहारेण शान्ति धर्मविध्वंसिन श्चासन्नित्यपि पुराणादिभ्यो ज्ञायते। अतएव मनुनापि ते दस्युसंज्ञया तिरस्कृता अभवन्यथा-

'मुखवाहूरुपज्जानां या लोके जातयो वहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्वे ते दस्यवः स्मृताः।। इति

अनेन म्लेच्छादीनां दस्युताश्रुतेः

आलापाद् गात्रसंस्पर्शान्निःश्वासात् सहभोजनात्।
सहशय्यासनाद् यानात् पापं सञ्चरते नृणाम्।।

इत्यनेन दुर्जनसंसर्गमात्रस्यैव पापसंक्रामकत्वाभिधानात् दुर्जन संसर्गेण सज्जना अपि दुर्जना भवन्तीति दर्शनाच्च संक्रामकरोगिसंसर्गेण सुस्थदेहधारिणामपि तद्रोगाक्रान्ततामिव निर्मलचेतसामार्याणामपि तादृशतमःस्वभावात्मक जातिभि र्भोजनयौनादि गुरुतरसंसर्गेण तथाविध तमःस्वभावता प्राप्तिमाशङ्क्य वैदिकैः 'वर्जनीयं

प्रयत्नेन सर्वथा परिवर्जयेत्' इति न्यायेन आत्मरक्षणार्थं सर्वथा दुर्जन संसर्गं वर्जयितुमत्युत्कटमिदं जातिच्युति पर्यन्तमभिधीयते। विशेषतः भोजन व्यापारस्य अधर्मत्वाभावेऽपि भोजनयौन संसर्गयोरेव परस्परं निविड़ात्मीयता जनकत्वात् तद्द्वारा क्रमशः प्रतियो- ग्यनुयोगिनो स्तुल्यगुणताप्राप्ति र्लोकेऽपि दृश्यत इति तमोगुणाच्छन्नैः सह भोजन संसर्गादधिकतरं तमोगुणताप्राप्तिः सुतरां सम्भवत्येव। अत स्तद्भयेन तथाविध दुर्जनसंसर्गं केऽपि न कुर्य्युरित्येव शास्त्रीयतात्पर्य्यं तथाविधोत्कटविधानं प्रति बोद्धव्यम्।।७३।।

एतादृशयुक्तिसङ्गतोऽस्पृश्यताविचार एव वैदिकानामभिप्रेतः, नत्वाभिजात्यादिमूलकः। वैदिकमते शास्त्रोपदिष्ट कर्ममात्रस्य धर्म्यतया गुरुत्वेनोपदिष्ट स्तथाविधोऽस्पृश्यताविचारोऽपि धर्म्यबुद्ध्या श्रद्धयै तै र्गृहीत इति धर्मीयसंस्कारवशात् अत्रातिदृढ़तावलम्ब्यते। नात्र विचारे तेषां हिंसादिदोषलेशोऽपि कश्चित् तिष्ठति। किन्तु वैदिकभिन्नेष्वपि प्रकारान्तरेण अयमस्पृश्यताविचारो दृश्यते। तथाहि-खृष्टादिभिरभिजातैरनभिजातानां स्वजातीयानामपि पंक्तिभोजनपाणिग्रहणादि संसर्गोऽधुनापि परिह्रीयते। परन्त्वत्र तेषां धर्म्यबुद्ध्याभावात् वैदिकवदतिदृढ़ता न दृश्यत इत्वेव विशेषः।।७४।।

अतएव एतादृशमत्युत्कटमस्पृश्यतावादं प्रचारयन्तोऽपि वैदिका न म्लेच्छादि जातिमात्र विद्वेषिणो भवन्ति। सज्जनान् म्लेच्छादीनपि समादरेण सर्वदा ते स्वजनवत् समाचरन्ति च। तथाहि-शकहूणादयो ये ये म्लेच्छाद्यभिधाना राजानो भारतमधिकृत्य तत्रत्यान् शान्तिप्रियजनान् तदीय धर्मीयाचारांश्चानुत्पीड्य सुशासनेन प्रजानां श्रद्धाभाजनान्यभवन् तैस्तदीय वंशोद्भवैश्च 'राजपुत' सङ्ज्ञकैः सह भोजन-विवाहादिगुरुतर संसर्गानपि कृत्वा वैदिका जातिच्युता धर्मच्युता वा नाभवन्। वरञ्च शकादयस्ते तैः क्रमशः क्षत्रियधर्मावलम्बिनः कृता स्तथात्वेन स्वीकृताश्चेति।

अधुना म्लेच्छादि जातिषु धर्मीयाचाराः प्रतिष्ठिताः। तेष्वपि वैदिकेष्विव बहवो धार्मिकाः शिक्षिताः सदाचार सम्पन्ना महानुभावा विद्यन्त इति स्वधर्मनिष्ठा अपि बहवो वैदिकाः संस्कार विमुक्ताः सन्तः तैः सह भोजनादि गुरुतरसंसर्गेऽपि धर्मीय प्रतिबन्धकतां नाङ्गीकुर्वन्ति।

एतेन चाण्डालादि संसर्गोऽपि व्याख्यातः। तेषामपि सत्त्वगुणाश्रितत्वे

अस्पृश्यत्वाभावात्। अतएवोक्तम्-'चाण्डालोऽपि द्विजश्रेष्ठो हरिभक्तिपरायणः' इति। चण्डालादय श्चण्डालत्वादिनैव नावज्ञेया स्तदानीमपि आसन्। तथा चोक्तं मनुना-

श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि।। (२/२३८)

अन्त्यश्चाण्डाल इति कुल्लूक भट्टः।।७५।।

प्रतीकोपासना।

अथास्मिन् हिन्दुधर्मे अचेतनायां मृन्मयादि प्रतिमायां भगवदुपासना दर्शनात् पौत्तलिकोऽयमुपासना धर्म इति चेन्न 'एकमेवाद्वितीयम्'- (छान्दो ६/२/१)। 'ब्रह्मैवेदं सर्वम्'-(बृह-४/५/१) इत्यादि श्रुतेः ; 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति' 'एकैवाहं जगत्यत्र द्वितीया का ममापरेति' च स्मृते श्चेश्वरातिरिक्त वस्तुनोऽसत्त्वात् मृन्मयादि मूर्त्तिरपि न भगवत्सत्तारहितेति घटाकाशे महाकाश भावनेव प्रतिमादौ भगवद्भावना नासङ्गता भवति। एवं 'मनो ब्रह्मेत्युपासीत' (छान्दो-३/१८/१) इत्यादि श्रुतिसिद्ध प्रतीकोपासनायां 'ब्रह्मदृष्टिरुत्कर्षात्' (४/१/५) इति ब्रह्मसूत्रे मनस्येव ब्रह्मदृष्ट्या उपासनमिति व्याख्यानात् प्रतिमादि प्रतीकेऽपि तथैव ईश्वर बुद्ध्या संराधनं सङ्गच्छते।

अपि च उपासनाहि-सगुण ब्रह्म विषयक मानस व्यापार रूपा ध्यानात्मिकैव। अन्यत् बाह्य पूजादिकं सर्वं चित्तनैर्मल्यानुकूलतया गौणम्। तथाचोक्तं वेदान्त सारे- 'उपासनानि सगुण ब्रह्म विषयक मानस व्यापार रूपाणि।...........नित्य नैमित्तिकादि कर्मणां बुद्धिशुद्धिः परं प्रयोजनम्। उपासनानान्तु चित्तैकाग्र्यम्। 'तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतेः (बृह ४/४/२२), 'तपसा कल्मषं हन्ति' इत्यादि स्मृतेश्च। नित्यनैमित्तिकयोरूपासनानाञ्च अवान्तर फलं पितृलोक सत्यलोक प्राप्तिः, 'कर्मणा पितृलोको विद्यया देवलोकः' इत्यादि श्रुतेः।'' इति।।७६।।

एतादृशोपासनासिद्ध्यर्थं प्रथमं प्रतीकोपासनमेव सुकरं भवति तथाचोक्त मुत्तर गीतायाम्-

'अग्निर्देवो द्विजातीनां मुनीनां हृदि दैवतम्।

प्रतिमा स्वल्पबुद्धीनां सर्वत्र समदर्शिनाम्।। इति (३ अः)

एवञ्च भगवतो ह्युपासना मुक्तार्थमभ्युदयार्थं वा लोकैरनुष्ठीयते तत्र मुक्तिकामिनां पक्षे 'ब्रह्मविद ब्रह्मैव भवति' इति (मुण्डक ३/२/६), 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति (श्वेताश्व-३/८) च श्रुतेः आत्मदर्शनं विना पुनः पुनर्जनन मरणाद्यशेष क्लेशसङ्कुल संसारावर्त्तनाद् विमुक्ते रुपायान्तराभावेन, तदर्थम् 'आत्मा अरे वा द्रष्टव्यः श्रोतव्योमन्तव्यो निदिध्यासितव्यः' इति (बृह-४/४/५), 'ज्ञानप्रसादेन विशुद्धसत्त्व स्ततस्तु तं पश्यति निष्कलं ध्यायमानः' (मुण्डक-३/१/८) इति च श्रुतेः श्रवण मनन पूर्वकं निदिध्यासनमेव आत्मदर्शनोपायत्वेनाभिहितम्, नान्यत्। निदिध्यासनं हि पञ्चदश्याम्-

'ताभ्यां निर्विचिकित्सितेऽर्थे चेतसः स्थापितस्य यत्।
एकतानत्वमेतद्धि निदिध्यासनमुच्यते।।'

इत्युक्तलक्षणं योगशास्त्रोक्त ध्यानस्वरूपमेव। 'देशवन्धश्चित्तस्य धारणेति' 'तत्र प्रत्ययैकतानता ध्यानमिति च (पातञ्जल-३/१-२) सूत्रयोः कस्मिंश्चिद् वस्तुनि चित्तं स्थिरीकृत्य तत्र ध्येयविषयक ज्ञानस्याविच्छेद प्रवाह एव ध्यानमित्यर्थत्वात्।

इत्थमविरतं परमात्मानं ध्यायन् समाध्यवस्थायां यदा निवात निष्कम्प दीपकलिकावत् चित्तं स्थिरीकरोति तदैवात्मनि ब्रह्मस्वरूप दर्शनं कृत्वा उपासको मुक्त्याधिकारी भवितुमर्हतीति योगशास्त्रे विशदमुपवर्णितम्।।७७।।

किन्तु 'द्वे वाव ब्रह्मणो रूपे मूर्त्तममूर्त्तञ्च' (बृह-४/३/१) इत्यादिश्रुतेः परमात्मनो ब्रह्मणो मूर्त्तामूर्त्तस्वरूपत्वादचिन्तनीय स्वरूपस्य तस्य भावना साधारणजनै-रसाध्येति प्रथमं प्रत्यक्ष प्रतीके कस्मिंश्चिद् विग्रहादौ चित्तं स्थिरीकृत्य तत्रेश्वरबुद्ध्या ध्यानमभ्यस्यते। अतएव 'मनो ब्रह्मेत्युपासीत'-इत्यादि श्रुतिः प्रतीकोपासनं प्रशंसति। श्रूयते च तथैव रामतापन्याम्-

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः।
उपासकानां कार्य्यार्थं ब्रह्मणो रूप कल्पना। इति। तथा स्मृतावपि-
साकारेण महेशानि निराकारञ्च भावयेत्।
साकारेण विना देवि निराकारं न पश्यति।

इति कुब्जिकातन्त्रे (६ पः)

अग्निर्देवो द्विजातीनां मुनीनां हृदि दैवतम्।
प्रतिमा स्वल्पबुद्धीनां सर्वत्र समदर्शिनाम्।। इत्युत्तरगीतायाञ्च प्रतीकोपासनायाः प्रयोजनमुपवर्णितम्।।७८।।

अभ्युदय कामिनां पक्षेऽपि 'वायव्यं श्वेतमालभेत भूतिकामः' ; 'वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेन उपधावति, स एवैनं भूतिं गमयति'-(यजुः-२/१/१); 'इष्टापूर्त्तं बहुधा जातं जायमानं विश्वं विभर्त्ति भुवनस्य नाभिः। तदेवाग्नि स्तद् वायु स्तत्सूर्य्य स्तदु चन्द्रमाः।'-(तैत्ति-नारा-१/६) इत्यादि श्रुतेः।

'आरोग्यं भास्करादिच्छेद् धनमिच्छेद्धुताशनात्।
ज्ञानञ्च शङ्करादिच्छेन्मुक्तिमिच्छेज् जनार्दनात्।। इति

स्मृतेश्च मूर्त्तामूर्त्तस्वरूपोऽद्वितीयो भगवानीश्वरोऽपि संसारपरिचालनार्थं तत्तत्कर्मस्वधिकृत-तत्तद् देवता स्वरूपेण तत्तत्कर्माणि सम्पादयति। स एव वायुरूपेण वाति, आदित्यरूपेणातपति, अग्निरूपेण दहति; कर्मणां फलदानेऽपि वायुरूपेणैश्वर्य्यम्, आदित्यरूपेणारोग्यम्, अग्निरूपेण धनं, शङ्कररूपेण ज्ञानं, विष्णुरूपेण च मुक्तिं प्रयच्छतीति दर्शनात् तत्तदभ्युदय कामनया वाय्वादिस्वरूप एवेश्वरबुद्ध्या समाराधने तत्तदभीष्टं सत्वरमुपजायते। यथा एकस्यैव राज्ञोऽमात्यादि भेदेन विभज्य न्यस्तानां कर्मणां तत्तत् कर्म सम्पादनार्थं जनाः तत्तत् कर्मण्यधि-कृतममात्यादिकं राजप्रतिनिधिं राजदृष्ट्या उपसेव्य सत्वरं कृतकृत्या भवन्ति। किन्तु राजदर्शनस्यातिदुर्घटत्वात् साक्षादेव राजसेवया कार्य्यसिद्धिः प्रायेणासाध्येति मत्वैतमुपायं परित्यजन्ति, तथा उपासका अपि मूर्त्तामूर्त्त स्वरूपत्वात् अचिन्तनीय-स्वरूपस्य भगवतो भावनाया अतिदुःसाध्यतया निराकारस्य भगवतो ध्यानात्मको-पासनाद्वारा साक्षाद् भगवतः प्रीतिसम्पादनजन्याया अभीष्टसिद्धेः कामनां परिहृत्य तत्तद्विग्रहादिप्रतीकमेव भगवद्बुद्ध्या सौकर्य्यार्थमेव सेवन्ते। ब्रह्मदर्शिनामुपासकानां पक्षे तु प्रतीकोपासनायाः प्रयोजनं नास्तीति ध्यानात्मकोपासना पक्षपातिनां वैदिकानां सिद्धान्तः।।७६।।

येषान्तु मते उपासना प्रार्थनारूपेव न्याय्या। यस्मादुपासनाया लक्ष्यं च

भगवत्प्रीतिसम्पादन द्वारा पार्थिवसुखावधि स्वर्गसुखपर्य्यन्तमेव। तेषां शास्त्रेषु स्वर्गभोगस्य कदाप्यवसानमस्ति नवेति, अस्ति चेत् तदुत्तरमात्मनः का गतिः, नास्ति चेत् कियतोपासनादि कर्मणा स्वर्गभोगो लभ्यते, तदपेक्षया स्वल्पप्रमाणोपासनादिकर्मणाञ्च किं फलमित्यादि प्रश्नानामालोचनाभावात्, 'नैषा तर्केण मतिरापनेया' (कठ-१/२/६) इति, 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।' (महा-शान्ति) इति च शास्त्रानुसारेण तद्विचारपराङ्मुखानामीश्वरप्रीति साधनार्थं वाङ्मात्रसाध्यं प्रार्थनात्मकमुपासनमेव सुकरं सुपर्य्याप्तञ्च भवति। तत्तच्छास्त्रानुक्तत्वात् निर्वाणमुक्तिपदार्थस्यावास्तवया अतिदुःसाध्यतया च निर्वाण मरीचिकायै ध्यानात्मकमुपासनं निष्प्रयोजनमेवेति सिद्धान्त, स्ते तथैव समाचरन्तु, नात्र कोऽपि वैदिकानां विरोधः, प्रार्थनात्मकमुपासनमपि तेषां सम्मतमेव 'तं यथायथोपासते तथैव भवतीति श्रुतेः,

'रुचीनां वैचित्र्यादृजुकुटील नानापथजुषां

नृणामेको गम्य स्त्वमसि पयसामर्णव इव।' इति महिम्नस्तवे भगवन्तं प्रति पुष्पदन्यस्योक्ते श्च। केवलमुपासनयोरनयोरेका निर्वाणपर्य्यन्तसाधिका, अपरा च स्वर्गसुखपर्य्यन्तेति विशेष इति दिक्।।८०।।

## वेदरहस्यम्।

अथ कोऽसौ वेदः? यद्बोधित इष्टसाधनताक आचारो धर्मत्वेन परिगण्यत इति चेदत्रोच्यते-वेदशास्त्रमीश्वरवाक्यरूपं सिद्धर्षि स्मृतिमाध्यमेन जगति प्रचारितमेव। यथाह पराशरः -

'न कश्चिद् वेदकर्त्ता च वेदस्मर्ता चतुर्मुखः।
तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे।।'' (१/२०) इति

एवं यज्ञादिभिः स्वर्गगमनादेः प्रत्यक्षादि प्रमाणाभावेन वेदमात्रगम्यत्वादतीन्द्रिय ज्ञानमयञ्चेदं शास्त्रमिति वैदिकाः सर्वे विश्वसन्ति। अतएव सायणाचार्य्यः- 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद' इति तल्लक्षणमुपवर्णितवान्।

एवञ्चेत् ईश्वर-तद्दूत-तत्पुत्रैतत्त्रित्वावच्छिन्न यिषु प्रवक्तृकं 'बाइवेलम्' ईश्वरदूत-महम्मदोमुखोदितं 'कोराण'-ञ्चापि स्वीकर्त्तव्यम् ईश्वर वाक्यमेवेति। तौ

यिषु-महम्मदौ सिद्धमहापुरुषौ सर्वसम्मतौ, तच्छास्त्रद्वयञ्च हिन्दूनां वेदशास्त्रमिव अतीन्द्रियधर्मप्रकाशकमिति च खृष्ट-महम्मदसम्प्रदायानामपि विश्वासो दृश्यते।।८१।।

अपि च अचिन्तनीयस्वरूपो भगवान् ईश्वरो नहि स्वरूपतः स्वयमाविर्भूय अस्भदादिवत् कुत्राप्यनुशास्ति शास्त्रम्। सर्वत्रैव सिद्धपुरुष माध्यमेन स तत् प्रकाशयति; यन्माध्यमेनानुशास्यते शास्त्रं तस्य भाषयैव तत्प्रकाशो युज्यते, दृश्यते चापि। तथाहि-

भारतीयार्य्यसिद्धपुरुषा ऋषयः प्रत्येकमेव समाध्युपलब्धं वेदवाक्यं स्वयैव भाषया संस्कृताख्यया, यिषुश्च तदीयया 'हिब्रू' भाषया बाइबलं, महम्मदश्चारव्य-भाषया स्वया कोराणञ्च इत्येवमन्येऽपि सर्व एव स्वस्वभाषयैव स्वस्व धर्मशास्त्रं भगवदुपदिष्टविश्वासेन प्रचारयामासुः। तथा सति श्रुतिस्मृत्यादिवत् बाइबल कोराणादीनि धर्मशास्त्राण्यपि वेदपर्य्यायभुक्तया वैदिकानामपि श्रद्धेयान्येव भवितुमर्हन्ति।।८२।।

सर्वएव शास्त्रप्रवर्त्तकाः सत्यदर्शिनः पक्षपातशून्या धर्मिष्ठा अपि देशकाल निमित्तादिभेदेन आचारादिभेदप्रयोजनमनुभवन्त एव तथैव भगवदुपदेशाद्वा क्वचित् क्वचित् प्रत्येकमेव परस्परं भिन्नाचारशास्त्रभाषिणो भवन्ति स्म। यस्मिन् देशे काले निमित्तादौ वा यो हितकारितया धर्मरूपेण स्वीक्रियते स एव देशाद्यन्तरे कुत्रचिदहितोत्पादकतया अधर्मो भवतीति प्राक् प्रपञ्चनात् तत्तद्देशाद्युचितं धर्मशास्त्रं परस्परं क्वचित् क्वचित् विभिद्यत इति नैतद् विचित्रम्।

तस्मादीश्वरानुगृहीत सिद्धमहापुरुषमाध्यमेन जगति प्रचारितानि कोराणादि-धर्मशास्त्राण्यपि देशान्तरे भाषान्तरेण चोद्धुतान्येतान्यपि वेदवत् इष्टप्राप्त्यनिष्ट-परिहारयोरलौकिकोपायज्ञापकत्वात् तत्तच्छास्त्रविहित धर्मैश्चापि वैदिकधर्मस्या-भिन्नत्वमेव सूचयन्ति। विशेषस्तु सर्व एव स्वकीयशास्त्राचारान् प्रतिपालयन्त एव भगवत्प्रीतिभाजो भवन्तीति। तथाचोक्तं भगवता भगवद्गीतायाम्-

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।। इति।

धर्मीय सम्प्रदायाः सर्वे यद्येतत् धर्मतत्त्वं शान्तचेतसा उपलब्धुं स्वीकर्त्तुञ्च

यवन्ते तर्हि धर्मविषये साम्प्रदायिकविरोधः प्रायशो दृश्यमानः क्रमशः जगतो विलुप्यत एवेति दिक्।।८३।।

एतावता वैदिकधर्मरहस्यं विस्तरेणालोचितम्। अधुना दृष्टिपातमात्रेण तत्सारार्थस्मरणार्थं धर्मरहस्यं सारतः संकलय्य पुनः प्रदर्श्यते।

१) वैदिकमते वेदानां तदनुगत शास्त्राणाञ्च सम्मत आचार एव धर्मः। स च द्विविधः-नैतिको वैश्वासिकश्च। तत्र नैतिकधर्मः अहिंसादिस्वरूपो मानवसाधारणोऽभिन्न एव। वैश्वासिकधर्मश्च सम्प्रदायभेदेन स्वरूपतो भिन्नवत् प्रतीयमानोऽपि धर्मस्य सामान्य लक्षणव्याप्तत्वात् सर्व एव वस्तुतो न विभिद्यते। केवलं तत्तत् सम्प्रदायसंज्ञया विशेषतो विभिन्ननाम्नाऽभिधीयते किल।

२) तत्र प्रकृतोऽयं वैश्वासिको हिन्दुधर्माभिध वैदिकधर्मो हि प्रशस्तकल्पे वर्णाश्रमाचार एव। अप्रशस्त कल्पे तु-शास्त्रविहितानां सर्वेषाम् आचाराणां प्रतिपालनमनेकेषां प्रायेण न सम्भाव्यत् इति श्रद्धया यथाशक्ति वैश्वासिकाचारप्रतिपालनेनापि स्वधर्मरक्षा भवति। अधर्माचरण द्वारा पापसञ्चारेण जनानामधः पतनमेव भवति, नत्वेतावता स्वधर्माधिकारोऽपि विलुप्यते।

३) धर्मस्य स्थितिभूमिः-अहिंसा शास्त्रविषयेषु परमा श्रद्धा च। सम्प्रदायभेदेन शास्त्रभेदेऽपि स्वशास्त्रविहित आचार एव प्रत्येकं स्वधर्मः। शास्त्रान्तर विहितानामाचाराणां स्वधर्मत्वाभावेऽपि श्रद्धयैव ते द्रष्टव्याः, द्वेष्टव्या न कदापि।

४) गुणगत श्रेणिविभागानुसारेणैव वस्तुतश्चातुर्वर्ण्यस्य तदुचिताचारस्य च विभागः कल्प्यते। किन्तु जन्मनः परमेव गुणगतश्रेणिपरिचयासम्भवेन, सन्तानेषु पितृमातृगत गुणानामनेकांशसंक्रमणस्य प्रायिकत्वाच्च प्रथमतः पितृमातृगतजातिमेव स्वीकृत्य तदुचितसंस्कारादि धर्मकृत्यानि जातस्यागत्या कर्त्तव्यानि। ततश्च कदाचित् तस्य जात्यन्तरोचितगुणानामाधिक्यनिश्चयसम्भवे तज्जात्युचितधर्माधिकारप्राप्तौ बाधाभावः। शूद्रादीनां वेदाद्यधिकारोऽपि अनयैव रीत्या द्विजात्युचित गुणाधिक्यनिश्वयेन बोद्धव्यः।

५) रोगिणामिव अन्त्यजादीनामस्पृश्यताविचारश्च आत्मनः सुस्थतारक्षणवत्

पवित्रतारक्षणाय यौक्तिक एव, नतु भ्रान्त संस्कारमूलकः। स्ववर्णेऽपि तमोगुणोचित हीनकर्मणा पातित्यसञ्चारे अस्पृश्यताविधानदर्शनात्। अतोऽन्त्यजादीनां तमोगुणाच्छन्नत्व पक्षे एव अस्पृश्यत्ता विधीयत इत्येव शास्त्रीयाभिप्रायो बोद्धव्यः।

६) उपासना हि सगुणब्रह्मविषयक ध्यानात्मिकैव मुख्या, मुक्तिपर्य्यन्तसाधकत्वात्। प्रार्थनाद्युपासनयाऽभ्युदयसिद्धावपि मुमुक्षूणां ब्रह्मस्वरूपदर्शनं विना मुक्तेरुपायान्तराभावेन तदर्थं ध्यानात्मकमुपासनमाचरितव्यमेवेति तदनुकूलतया प्रथमतः प्रतीकोपासना निम्नाधिकारिणां स्वीकर्त्तव्या।

यतो ध्यानेन चित्तमलं समूलं यावन्नोत्पाटितं तावत् चेतसि ब्रह्मदर्शनं न स्यादिति कस्मिंश्चित् प्रतीके ब्रह्मस्वरूपमारोप्य यद्ध्यानं विधीयते तदेव प्रतीकोपासनम्। तत्र मूर्त्तामूर्तोभयस्वरूपस्य भगवतः स्वरूपचिन्तनं प्रथमतोऽसम्भवमेवेति मृन्मयादिविग्रहे तदात्मकत्वेन ध्यानमेव घटाकाशे महाकश ध्यानमिव सुकरं भवति। पश्चाच्च क्रमशः निराकारध्यानपूर्वकं ब्रह्मदर्शनं सर्वेषां सम्भवत्येवेति प्रतीकोपासना पौत्तलिकोपासनेति न वाच्यम्। एतादृशी उपासनापि भगवत् प्रीतिजनकत्वात् अभ्युदयायापि कल्पत इति दिक्।।८४।।

एतावता धर्मो न साम्प्रदायिकः किन्तु सर्वजनीनः सार्वभौमश्चेति, धर्मेण शान्तिरुन्नतिः सुस्थितिश्चेति, अधर्मेण तद्वैपरीत्यमिति च प्रतिपादितम्। स च धर्मो नैतिको वैश्वासिकश्चेति द्विविधोऽपि दर्शितः। तत्राहिंसादयो नैतिकधर्माः कैश्चिद् धर्मरूपेणास्वीकृता अपि नीतिरूपेण सर्वैरेव पालनीया हितकारित्वादित्यपि स्वीक्रियते हि।

अपि च शास्त्रविश्वासमूलकः परलोके जन्मान्तरादौ वा धर्मजन्यसुखादेरधर्मजन्यदुःखादेश्चातीन्द्रियविषयस्य यो विश्वासः स एव नैतिकधर्मबोधमपि प्रबोधयतीति पश्चादेव प्रपञ्चयिष्यते चेति।।८५।।

अधुना ये च समाजनेतारो राष्ट्रनेतारः साम्यवादिनो वा धर्माविश्वासाद् राष्ट्रपरिचालने धर्मनिरपेक्षतामुच्चैरहरहः प्रचारयन्ति, कुर्वन्ति च प्रचण्डाघातं धर्मविश्वासे तेषामियं धर्मनिरपेक्षता हि किं यावतीयधर्माणां, वैश्वासिकधर्माणां साम्प्रदायिकधर्मसमूहानां वा निरपेक्षता? अपि चेयं निरपेक्षतापि किम् अहित-

कारित्वात्, निरर्थकत्वाद्वा? इत्याद्याशङ्कावारक व्याख्याप्रचाराभावात्, विशेषतः प्रचारकनेतृवर्गेष्वपि अनेकेषां यथेच्छाचरणदर्शनाच्च विभ्रान्ता मानवा प्रत्येकं यथारुचि तदर्थं कुर्वन्तः दुर्नीतिमाश्रित्य सर्वथा विपथगामिनो भवन्ति।

यद्यपि अहिंसाव्रतिनो महात्मनो गान्धिमहोदयस्य अहिंसाव्रतानुगत्यं प्रतिश्वासं घोषयन्त स्तथाविधा नेतारः अहिंसादिनैतिकधर्माणामवश्यपालनीयत्तां प्रकारान्तरेण प्रचारयन्ति, तथापि हिंसावर्जनविषयिणी स्वल्पापि शिक्षाव्यवस्था समाजेषु नाद्यापि संदृश्यते। नहि 'हिंसा न कर्त्तव्या' इत्युपदेशश्रवणादेव सर्वैः हिंसादयः परीह्रीयन्ते, किन्तु हिंसादीनां भीषणं कुफलं अहिंसादीनान्तु सुखप्रदं हृद्यफलं बाल्यादेव जनानां चेतसि विविधैरेवोपायै र्यथा प्रत्ययितं स्यात् तथैव शिक्षा व्यवस्था कर्त्तव्या। तदुपायेषु धर्मविश्वासोऽप्यपरिहार्य्य एवेति। तदभावादस्माभिः शङ्क्यते-राष्ट्रिय धर्मनिरपेक्षता-भङ्गभियैव सर्वैः तादृशीं नैतिकधर्म शिक्षामपि किं परिहरन्तीति।

अतोऽधुना जागतिकी यैतावती विपत्ति दुःखदैन्यमशान्तिर्वा सर्वेषा-मेवैषामन्यतमं कारणमीदृशी धर्मनिरपेक्षतापि भवति नवेति पुनर्विवेचनायाः समयोऽयं समागतः।

वैश्वासिक धर्मतोऽहितकारिणो बहवः कुसंस्काराः अपि समाजेषु सञ्जाता इति नास्वीक्रियते, किन्तु तादृशकुसंस्कार निरासेन समं हितकारिणोऽपि 'धर्मीय-संस्काराः विषवल्लीविनाशेन हन्यान्नाराम वृक्षकान्' इति न्यायेन यथा नोन्मूलिता भवेयु स्तथा धीरं विविच्यतां भवद्भिः।।८६।।

त्रिकालाभिज्ञाः सत्यदर्शिनः शास्त्रकृतो द्विविधादेव धर्मादृते कथमपि प्रजानां शान्तिसुखादयो यथार्थतः राष्ट्रप्रतिष्ठाकारणानि भवितुं नार्हन्तीति प्राहुः। तेषामयम-भिप्रायः-

चित्तप्रसन्नतैव शान्तिः नतु लौकिकैश्वर्य्यादिनिमग्नता। अतुलैश्वर्य्यादि-सम्पन्ना उन्नतसभ्यताशालिनोऽपि पाश्चात्यादिदेशवासिनामनेके मानवा शान्त्यभावात् भारतमागत्याधुना योगाभ्यासं हरिनामकीर्त्तनं वा कुर्वन्ति; अनेके तु आन्तर्जातिक शान्तिस्थापनव्याजेन परैश्वर्य्ये विद्वेषलेशशून्यं शान्तिप्रियं दुर्बलदेशं भारतादिकमेव सर्वदा स्वमुखापेक्षिणं कर्त्तुं यतन्ते। न केवलं स्वकीयैश्वर्य्यप्राचुर्य्यादिभिः तेषां परितुष्टिरपितु परकीयैश्वर्य्यं प्रत्यपि प्रभुत्वकामा वर्त्तन्ते चेति दर्शनात्। अत ऐश्वर्य्य

प्राचुर्य्यं न वस्तुतः शान्तिसुखपूर्णताविधाने समर्थम्। तथाचोक्तं मनौ-

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते।।८७।।

चित्तप्रसन्नतात्मिका शान्तिस्तु धर्माश्रितायां हिंसादिदोषशून्यतायामेव चित्तस्य सुलभा भवति जगत्याम्। यथोक्तं तैत्तिरीये-'धर्मो विश्वस्य जगतः प्रतिष्ठा' इत्यादि।

यद्यपि समाजकल्याणाय केवलं नैतिकधर्म एव पर्य्याप्तस्तथापि वैश्वासिकधर्मस्यापि नैतिकधर्मदार्ढ्यापेक्षा कर्त्तव्या। तथाहि, विश्वासमूला या नरकादिभीतिरधर्मजन्या भवति, सैव मानवान् हिंसादिस्वरूपात् नैतिकादधर्मान्निवर्त्तयति। नतु केवलाद् राजदण्डादितस्तत् सम्भाव्यते, प्रायेण यथार्थापराधस्य यथोचितप्रमाणाभावेन धर्माधिकरणादिषु तदुचित दण्ड दानासम्भव दर्शनात्। किन्तु सैव नरकादिभीति र्जनानामाजन्मनः संस्काररूपेण सञ्जाता चेतसि अन्यप्रमाण निरपेक्षा सती सर्वदैव तद्भय कातरान् मानवान् अधर्माचरणात् पराङ्मुखी करोति। तथैव विश्वासमूला स्वर्गादिसुखाकाङ्क्षापि आजन्मनः सञ्जाता क्लेशसाध्येऽपि अहिंसादि धर्माचरणे तान् प्रवर्त्तयितुं समर्था भवति। तथाविध विश्वासं विना क्लेशसाध्ये धर्मकर्मणि प्रवृत्तिरधर्मकर्मणि वा लोभनीये निवृत्तिः कस्यापि प्रायशो न सम्भाव्यते। तथाहि-

यस्य च कर्मणोऽनुष्ठानाभावात् कापि क्षतिराचरणाद्वा कोऽपि लाभो नोपलभ्येत तादृशे कर्मणि प्रवृत्तिः, अथवा यस्यानुष्ठानात् क्षतिरननुष्ठानाच्च लाभो नोपलभ्येत तादृश इन्द्रियतृप्तिकर कर्मणि अप्रवृत्तिश्च कस्यापि न जायेत। प्रयोजन मनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति न्यायात्, इष्ट साधनता ज्ञानस्य प्रवृत्तौ जनकत्वात्, द्विष्टसाधनताज्ञान जन्य द्वेषस्य निवृत्तिं प्रति हेतुत्वाच्च। अतएव तादृशधर्मविश्वासाभावादधुना प्रायशोऽशेष क्लेश प्रसूति कामादि रिपूणां सर्वत्राप्रतिहतगति र्जगति दरीदृश्यते। अतएव आधुनिकसभ्यताभिमानिनां सुशिक्षितानां भाषया ये ये 'धर्मान्धविश्वासिनः' जना स्तेष्वेव अन्धविश्वासिषु हिंसादिदोषस्वल्पतापि दृश्यते चेति।

अधुना विश्वास धर्मं दत्तजलाञ्जलीकृत्य राष्ट्रिय कल्याणं काम्यते चेत् प्रवृत्ति परवशा अशेषानिष्टनिदान स्वरूपा हिंसालोभ कामक्रोधादयो दोषाः समाजात्

# श्रीहरिदास शास्त्री सम्पादिता ग्रन्थावली

| क्रम सद्ग्रन्थ | मूल्य |
|---|---|
| १–वेदान्तदर्शनम् भागवतभाष्योपेतम् | १५०.०० |
| २–श्रीनृसिंह चतुर्दशी | १०.०० |
| ३–श्रीसाधनामृतचन्द्रिका | २०.०० |
| ४–श्रीगौरगोविन्दार्चनपद्धति | २०.००.०० |
| ५–श्रीराधाकृष्णार्चनदीपिका | २०.०० |
| ६–७–८–श्रीगोविन्दलीलामृतम् | ४५०.०० |
| ६–ऐश्वर्यकादम्बिनी | ३०.०० |
| १०–श्रीसंकल्पकल्पद्रुम | ३०.०० |
| ११–१२–चतु:श्लोकीभाष्यम्, श्रीकृष्णभजनामृत | ३०.०० |
| १४–श्रीभगवद्भक्तिसार समुच्चय | ३०.०० |
| १५–ब्रजरीतिचिन्तामणि | ४०.०० |
| १६–श्रीगोविन्दवृन्दावनम् | ३०.०० |
| १७–श्रीकृष्णभक्तिरत्नप्रकाश | ५०.०० |
| १८–श्रीहरेकृष्णमहामन्त्र | ५.०० |
| १६–श्रीहरिभक्तिसारसंग्रह | ५०.०० |
| २०–धर्मसंग्रह | ५०.०० |
| २१–श्रीचैतन्यसूक्तिसुधाकर | १०.०० |
| २२–श्रीनामामृतसमुद्र | १०.०० |
| २३–सनत्कुमारसंहिता | २०.०० |
| २४–श्रुतिस्तुति व्याख्या | १००.०० |
| २५–रासप्रबन्ध | ३०.०० |
| २६–दिनचन्द्रिका | २०.०० |
| २७–श्रीसाधनदीपिका | ६०.०० |
| २८–स्वकीयात्वनिरास, परकीयात्वनिरूपणम् | १००.०० |

| | |
|---|---|
| २९–श्रीराधारससुधानिधि (मूल) | २०.०० |
| ३०–श्रीराधारससुधानिधि (सानुवाद) | १००.०० |
| ३१–श्रीचैतन्यचन्द्रामृतम् | ३०.०० |
| ३२–श्रीगौरांग चन्द्रोदय | ३०.०० |
| ३३–श्रीब्रह्मसंहिता | ५०.०० |
| ३४–भक्तिचन्द्रिका | ३०.०० |
| ३५–प्रमेयरत्नावली एवं नवरत्न | ५०.०० |
| ३६–वेदान्तस्यमन्तक | ४०.०० |
| ३७–तत्वसन्दर्भः | १००.०० |
| ३८–भगवत्सन्दर्भः | १५०.०० |
| ३९–परमात्मसन्दर्भः | २००.०० |
| ४०–कृष्णसन्दर्भः | २५०.०० |
| ४१–भक्तिसन्दर्भः | ३००.०० |
| ४२–प्रीतिसन्दर्भः | ३००.०० |
| ४३–दशःश्लोकी भाष्यम् | ६०.०० |
| ४४–भक्तिरसामृतशेष | १००.०० |
| ४५–श्रीचैतन्यभागवत | २००.०० |
| ४६–श्रीचैतन्यचरितामृतमहाकाव्यम् | १५०.०० |
| ४७–श्रीचैतन्यमंगल | १५०.०० |
| ४८–श्रीगौरांगविरुदावली | ४०.०० |
| ४९–श्रीकृष्णचैतन्यचरितामृत | १५०.०० |
| ५०–सत्संगम् | ५०.०० |
| ५१–नित्यकृत्यप्रकरणम् | ५०.०० |
| ५२–श्रीमद्‌भागवत प्रथम श्लोक | ३०.०० |
| ५३–श्रीगायत्री व्याख्याविवृतिः | १०.०० |
| ५४–श्रीहरिनामामृत व्याकरणम् | २५०.०० |
| ५५–श्रीकृष्णजन्मतिथिविधिः | ३०.०० |

| | |
|---|---|
| ५६-५७-५८-श्रीहरिभक्तिविलास: | ६००.०० |
| ५९-काव्यकौस्तुभ: | १००.०० |
| ६०-श्रीचैतन्यचरितामृत | २५०.०० |
| ६१-अलंकारकौस्तुभ | २५०.०० |
| ६२-श्रीगौरांगलीलामृतम् | ३०.०० |
| ६३-शिक्षाष्टकम् | १०.०० |
| ६४-संक्षेप श्रीहरिनामामृत व्याकरणम् | ८०.०० |
| ६५-प्रयुक्ताख्यात मंजरी | २०.०० |
| ६६-छन्दो कौस्तुभ | ५०.०० |
| ६७-हिन्दुधर्मरहस्यम् वा सर्वधर्मसमन्वय: | ५०.०० |
| ६८-साहित्य कौमुदी | १००.०० |

## बंगाक्षर में मुद्रित ग्रन्थ

| | |
|---|---|
| १-श्रीबलभद्रसहस्रनाम स्तोत्रम् | १०.०० |
| २-दुर्लभसार | १०.०० |
| ३-साधकोल्लास | ५०.०० |
| ४-भक्तिचन्द्रिका | ४०.०० |
| ५-श्रीराधारससुधानिधि (मूल) | २०.०० |
| ६-श्रीराधारससुधानिधि (सानुवाद) | ३०.०० |
| ७-श्रीभगवद्भक्तिसार समुच्चय | ३०.०० |
| ८-भक्तिसर्वस्व | ३०.०० |
| ९-मन:शिक्षा | ३०.०० |
| १०-पदावली | ३०.०० |
| ११-साधनामृतचन्द्रिका | ४०.०० |
| १२-भक्तिसंगीतलहरी | २०.०० |

❖

## गौशाला

आश्रम के अग्रभाग में एक बृहद् गौशाला है, जिसमें गोवंश की संख्या लगभग १६१ है। यहाँ पर गाय की सेवा (गो रक्षा) गाय के अनुकूल रूप में ही की जाती है न कि व्यवसाय की दृष्टि से। गाय श्रीकृष्णजी की भी पूज्य हैं जो कि उनकी भौमलीला से विदित है, उनको आदर्श मानकर ही यहाँ पर गाय की सेव्यरूप में सेवा की जाती है। गो-सेवा के लिए '**श्रीहरिदास शास्त्री गऊ संस्थान**' की स्थापना की गयी है तथा तेहरा ग्राम श्रीवृन्दावन के निकट 11 एकड़ भूमि भी खरीदी गयी है। वहाँ पर एक और नवीन बृहद् गौशाला है। वृद्धावस्था में भी महाराजश्री स्वयं गो-सेवा करते हैं। इस आश्रम का वातावरण प्राचीन समय के ऋषिकुलों जैसा है। आश्रम में एक विराट् ग्रन्थागार भी है जिसमें प्रचुर प्राचीन मुद्रित एवं हस्तलिखित ग्रन्थ उपलब्ध हैं। आश्रम की एक '**प्रेस**' भी है जिसका नाम '**श्रीगदाधर गौरहरि प्रेस**' है। इस प्रेस से अभी तक लगभग ८० सद्ग्रन्थों का संस्कृत, हिन्दी एवं बँगला भाषा में प्रकाशन हो चुका है।

---

मुद्रक :

**श्रीगदाधर गौरहरि प्रेस**

(श्रीहरिदास निवास)

प्राचीन कालीदह, वृन्दावन (मथुरा) उ. प्र.

फोन : ०५६५-२४४२०६८, २४४३६६५, ३२०२३२५